ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

३५ वर्षे चतुर्थोऽङ्कः ( अक्टूबरमासाङ्कः ) २०१० ई०

प्रधानसम्पादकः

प्रो० वाचस्पति उपाध्यायः

कुलपतिः

सम्पादकः

प्रो० रमेशकुमारपाण्डेयः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

( मानितविश्वविद्यालयः)

नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

३५ वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) २०१० ई०

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**




प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

**सम्पादकः**

प्रो० रमेशकुमारपाण्डेयः

**सम्पादकमण्डलम्**

प्रो० (श्रीमती) अमिता शर्मा

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

**मुद्रणसहायकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनु-सन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

संस्कृतमिति पदं संस्कृतभाषा-वाङ्मयोभयबोधकम्, यदुपजीव्य जीवनस्यान्तरं स्वरूपं ज्ञापयति संस्कृतिः, जीवनस्य जगतश्च परमोच्चभूमिं गतेनात्मना सात्त्विकमननचिन्तनाभ्यां यदनुभूयते "इदं विश्वस्मै विश्वाय हितकरमिदञ्च सुखकरं तत्संस्कृतौ समाविष्टम्। तपःस्वाध्यायपवित्रितान्तःकरणैः प्रवुद्धविशुद्धैः ऋषिभिरुद्भाविता भारतीया संस्कृतिः सभ्यता चोद्भावकोदारस्वभावहृदयनैर्मल्यविशिष्टाद् विश्वजनीनहिताय विश्वजनसुखाय च जाते। सा प्रथमासंस्कृतिर्विश्ववारेति प्रशस्यते विश्वैर्वरणीयेति उदीर्यते। अस्मिन् संसारे संस्कृतेः सभ्यतायाश्च कथङ्कारं विकासोऽभूदित्यर्थं वेदानुशीलनमनिवार्यं भवति। तदित्थं तदुक्तं सिद्धान्तात्मकं ज्ञानं संस्कृतिः, संस्कृतेरनुरूपं सदाचरणम्, सभ्यवेशः, मधुरं प्रियं सत्यसंलापादिकञ्च सभ्यता। ते संस्कृतिसभ्यते एकस्यैवादर्शतां गतस्य जीवनस्य आन्तरं बाह्यं स्वरूपं भवति। ज्ञानक्रिययोराचारविचारयोश्च सामञ्जस्यं सर्वत्र देशेऽत्र यदासाद्यते तदस्य पूर्णं विकासं सूचयति। ज्ञानं विना कर्म अन्धम्, कर्मणा विना ज्ञानं पङ्गु, भक्त्या विना ज्ञानं हृदयहीनं कर्म च निष्करुणं भवतीत्यत्रोपासनायां ज्ञानकर्मभक्तित्रितयस्य समरसताऽपेक्ष्यते। यदा च संस्कृतिरार्षवचननिरपेक्षा स्वभावे चागच्छति, तां पालयितुं मनः स्वतः प्रवर्तते, तदा सा सभ्यता भवति। रामायणकाले संस्कृतिरियमतीवोन्नतेति सर्वैः काव्यशास्त्रिभिः प्रवृत्तिशिक्षणाय राम एवोदाहारि-रामादिवद्वर्तितव्यमिति, रावणस्तु निवृत्तिशिक्षणायोपात्तः। तत्र काले स एकल एव, अन्ये तु तद्विपरीता केवलं तस्य भयेन तमनुसरन्ति स्म। तदेवमत्र सर्वं चिन्तनं विश्वपरकं, विश्वं हि सुरक्षितं चेत्सर्वं प्रातिस्विकं जगत् सुरक्षितमिति। विज्ञानस्योपरि अध्यात्मवादस्य नियन्त्रणमावश्यकम् तच्च स्वतोगृहीतं भवति, येन नियमिता वैज्ञानिका मानवविनाशाद् विरताः स्युः, यद्येकतो वादा संघर्षं कलहं शिक्षयन्ति, अपरतो मानवीयमावतनायाः शान्तिमुपदिशति। मानवतायाः सन्धायकमिदमुदारं संस्कृतवाङ्मयं शान्तिं जपति पठति उपदिशति चेतियं सरस्वती श्रुतिमहती न हीयताम् किन्तु महीयताम्। कर्तव्यं भवत्यस्माकं तस्या जीवातु-प्रदानेन रसायनचिकित्सया पुनर्यौवनसंपादनेनोज्जीवनमुन्मेषणं च तदपि च तस्या आश्रयभूतस्य संस्कृतस्य उज्जीवनेन संरक्षणेन च।

तद्दिशि प्रवृत्तेयं शोधप्रभानाम्नी शोधपत्रिका आन्तरदौर्बल्यमपनेतुं स्वस्थैः पथ्योपमैरौषधैर्द्यावद्वस्तु-बलोदयम्। तदस्याः प्रयासं सङ्कल्पं प्रस्तुतं च नैवद्यमङ्गीकृत्य सफलयन्तु सुधिय इति।

**प्रो० वाचस्पति उपाध्यायः**
कुलपतिः

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

सम्प्रति विश्वविद्यालयेषु निर्धारिता ये पाठ्यक्रमाः, तेषु अनुसन्धानात्मकः पाठ्यक्रमः मूर्ध्नि स्थितो दृश्यते। आङ्गलभाषायां रिसर्चशब्देन व्यवहृतस्यास्य पाठ्यक्रमस्य कृते शोधः, गवेषणा, अन्वेषणा, अनुसन्धानप्रभृतयः शब्दाः प्रयुज्यन्ते। इमे सर्वेऽपि शब्दाः प्रायः आङ्गलभाषायाः रिसर्च इतिशब्दमेव मनसि निधाय प्रचलिता भवन्ति। फलतः शोधस्य पाश्चात्यसरणिमेव सङ्केतयन्ति। भारतस्य प्राचीनाध्ययनपरम्परायां सूत्रग्रन्थेषु प्रच्छन्नरूपेण निबद्धानामर्थानां प्रकाशनाय सूक्ष्मविवेचनपुरस्सरमनुसन्धानं द्योतयन्तो भाष्यम्, वृत्तिः, विवृत्तिः, व्याख्या, टीका, टिप्पणीप्रभृतयः शब्दाः प्रयुक्ता दृश्यन्ते । भारतीयपरम्परायां विद्यायाः प्रवाहः गुरोः सकाशाज्जायते। अतएवोच्यते- वंशो द्विधा, विद्यया जन्मना च। विद्यावंश उत्कृष्टतरो भवति जन्मवंशात् मुखाद् जायमानत्वात्। गुरोः सकाशादधीतस्य विषयस्य अध्यापनं विधाय शिष्य ऋष्यृणान्मुक्तो भवति। गुरोः सकाशाद् विद्यां समधिगम्य शिष्यः तस्या विद्यायाः विकासाय निरन्तरं प्रयतते। विद्याऽपि क्रमश एव सिद्धा भवति। अत एव महाभाष्ये मुनिना पतञ्जलिना प्रोक्तं यत्- चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति- आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति। नैषधमहाकाव्येऽपि विद्यायाः चातुर्विध्यं निर्दिष्टमस्ति। एवं सुस्पष्टमिदं यत् भारतीयपरम्परायां व्यवहारमुखा विद्या विद्यते। ऋषित्वमूला विद्या नवनवोन्मेषशालिनीं प्रज्ञां विना नैव सम्भाव्यते। तस्याः सूत्रभाष्यात्मकोऽनुसन्धानगर्भनिर्भरः प्रवाहः पाश्चात्यपद्धतिमतिशेते नितान्तम्। एवंविधायाः विद्यायाः विकासार्थं प्रतिबद्धा शोधप्रभा सततं किञ्चिन्नवीनं तत्त्वमुद्दीपयति प्रत्यङ्कम्।

विविधविषयविश्लेषपराः त्रयोदश लेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो० रमेशकुमारपाण्डेयः**
सम्पादकः

# विषयानुक्रमणिका

## संस्कृतविभागः

## हिन्दी विभाग

# ध्वनितत्त्वविमर्शः

प्रो. काशीनाथमिश्रः

**तत्र भवद्भिर्भामह-भट्टोद्भट-वामनादिभिः प्रत्नैः।**
**गुणवृत्त्यालङ्कृत्या विवृतं काव्यस्य सौन्दर्यम्।।**
**तेषामत्र मतस्थितिमुपपादयता यथाशास्त्रम्।**
**क्रियते वेदीबन्धो ध्वनिसिद्धान्तप्रतिष्ठार्थम्।।**

चिरन्तनानां भामह-भट्टोद्भट-दण्डिवामन-प्रभृतीनाम् अलङ्कारनिबन्धेषु परवर्त्तिनि काले वैयाकरणकुलोपासित-स्फोटव्यञ्जक-ध्वनिभित्ति-प्रतिष्ठितस्य व्यञ्जनायाः करावलम्बमासाद्य लब्धाविर्भावस्य ध्वनिसिद्धान्तस्य सीमान्तदेशं संस्पृशन्त्याः विचारधारायाः तरङ्गध्वनि-परम्परा यथा यथा अस्माकं कर्णाभ्यर्णम् अभ्येति तथा तथा प्रक्रान्तस्य विषयस्य वेदीबन्धरूपेण तस्याः परिचयं प्रस्तोतुम् अधुना समुद्यताः स्मः। तथाहि अलङ्कारतन्त्र-प्रजापतिभिः चिरन्तनैरालङ्कारिकैः अलङ्कार-निरूपण-प्रसङ्गे तत्तदलङ्कार-निबन्धेषु मुख्यार्थातिरिक्तस्य अर्थस्य प्रतिपादनार्थं प्रयुक्तस्य अवगम-प्रतीयमान-लाक्षणिक-गौण-सुव्यञ्जित-प्रभृति-पदसन्दोहस्य परिचार्थं तत्तदलङ्कार-लक्षणेभ्यः स्थालीपुलाकन्यायेन कानिचित् पदानि समुद्धृत्य निदर्शनार्थम् अत्र सोदाहरणानि तानि प्रदर्श्यन्ते।

## १. तत्रादौ भामहस्य अवदानम्

चिरन्तनालङ्कारिक-मूर्द्धन्येन स्वकीये काव्यालङ्कारग्रन्थे-

**शब्दाश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः।**
**लोको युक्तिः कलाश्चेति मन्तव्याः काव्यगैर्ह्यमी।।**

इत्यनया कारिकया कवियशःप्रार्थिनां कृते अवश्यज्ञातव्यत्वेन निर्दिष्टेषु विषयेषु शब्दात् पृथक् अभिधान-शब्दोल्लेखस्य आशयं विवृण्वता भट्टोद्भटेन स्वकीये भामहविवरणाख्ये ग्रन्थे स्पष्टमेवोक्तं यदत्र अभिधानशब्देन शब्दस्य द्विविधो व्यापारः भामहाचार्यस्य अभिप्रेतो वर्त्तते। तत्र प्रथमः अभिधाव्यापारो मुख्यः द्वितीयश्च गुणवृत्तिः। प्रथमस्योदाहरणं यथा ''पर्वतादेति देवदत्तः'' इति। द्वितीयस्योदाहरणं यथा "एति जीवन्तमानन्दो नरं वर्षशतादपि" इति। अनेन विवरेण शब्दस्य योऽयं

गुणवृत्तिसमाख्यो व्यापारस्तस्य इदम्प्रथमतया समुल्लेखं विधाय काव्यार्थ-निरूपण-प्रसङ्गे भामहाचार्यस्य महत्त्वपूर्णम् अवदानं प्रमाणप्रतिपन्नं भवति।

अत:परं प्रतिस्तूपमालङ्कारं निरूपयता भामहेन कृतस्य "गुणसाम्यप्रतीति:" इति शब्दस्य प्रयोग: तदुदाहरणञ्च इत्थं समुपलभ्यते। यथा

**समानवस्तुन्यासेन प्रतिवस्तूपमोच्यते।**
**यथेवानभिधानेऽपि गुणसाम्यप्रतीतित:।।**
**कियन्त: सन्ति गुणिन: साधुसाधारणश्रिय:।**
**स्वादुपाकफलानम्रा: कियन्तो वाध्वशाखिन:।।**

अत्र उपमावाचकानां यथेवादिशब्दानाम् अनभिधानेऽपि परोपकारप्रवणयो: गुणिजनशास्त्रि-समूहयोर्मध्ये विद्यमानस्य वैरल्यलक्षणस्य गुणसाम्यस्य या प्रतीति: सा खलु व्यङ्ग्य-मुद्रयैव सचेतसाम् अधिमानम् अवतरति।

एवमेव समासोक्ति-नामकम् अलङ्कारं लक्ष्यलक्षणयोगेन विशदीकुर्वता "यत्र गम्यते अन्योऽर्थ:" इति स्पष्टम् उच्चार्य अवगमनाख्येन अभिधाव्यतिरिक्तेन शब्दव्यापारेण अवतरन्ती अर्थान्तरस्य प्रतीति: स्फुटमेव भामहेन संसूचिता। यथा–

**यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषण:।**
**सा समासोक्तिरुद्दिष्टा संक्षिप्तार्थया यथा।।**
**स्कन्धवान् ऋजुरव्याल: स्थिरोऽनेक-महाफल:।**
**जातस्तरुरयं चोच्चै: पातितश्च नभस्वता।।**

अत्र प्रथमं नितरां विकासम् उपेते ततश्च प्रभञ्जनेन निपातिते सर्वगुणसम्पन्ने वृक्षलक्षणे उपमानभूते अर्थे शब्दत: समुपात्ते सति तदनन्तरं प्राक्तनं समृद्धिभयम् अवस्थानं ततश्च कुटिलस्य कालस्य कराघातेन विनाशम् उपेतस्य तत्समानविशेषणस्य कस्यचिन्महापुरुष-लक्षणस्य उपमेयभूतस्य अर्थान्तरस्य या प्रतीति: सा व्यञ्जनयैव समुन्मीलति।

एवमेव "यत् अन्येन प्रकारेण प्रतीयते (तत्) पर्यायोक्तमिति तन्नामानम् अलङ्कारं लक्षयित्वा विलक्षणैकेन उदाहरणेन तद्व्याख्यानम् भामहेन कृतम् उपलभ्यते।" यथा–

**पर्यायोक्तो यदन्येन प्रकारेणाभिधीयते।**
**उवाच रत्नाहरणे चैद्यं शार्ङ्गधनुर्यथा।।**
**गृहेष्वध्वसु वा नान्नं भुञ्जमहे यदधीतिन:।**
**न भुञ्जते द्विजास्-तच्च रसदान-निवृत्तये।।** इति।।

अत्र दुष्टाशयेन शिशुपालेन प्रच्छन्नरूपेण भोजनं विषसम्मिश्रं विधाय तद् ग्रहीतुं तेन कृतां प्रार्थनां वाच्यात् अन्येन प्रकारेण प्रत्याचिख्यासुना अन्तर्यामिना भगवता श्रीकृष्णेन प्रोक्तं यद् वयं तदन्नं नैव भुञ्जमहे यदन्नं वेदाध्यायिनो ब्राह्मणाः प्रथमं नैव भुञ्जते। इत्थम् अनेन उत्तरेण ब्रह्महत्यालक्षणान्महापातकाद् भीतः शिशुपालः प्रथमं तद् विषमिश्रं भोजनं वेदाध्यायिभ्यो ब्राह्मणेभ्यो नैव समर्पयेत्, समर्पयेच्चेत् भोजने विषप्रयोगं नैव विदध्यात् इत्येवंविधो भगवतः श्रीकृष्णस्य अभिप्रायोऽत्र वाच्यादन्येन व्यङ्ग्यलक्षणेनैवं प्रकारेण प्रतीतिम् अवतरति।

एवमेव अपह्नुति-समाख्ये अलङ्कारे उपमालङ्कारस्य अन्तर्लीनत्वम् लक्ष्य-लक्षणयोगेन प्रतिपादयता तेन प्रोक्तं यथा–

**अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा।**
**भूतार्थापह्नवादस्याः क्रियते चाभिधा यथा।।**
**नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः।**
**अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः।।**

अत्र भृङ्गालीविरावस्य कन्दर्पधनुर्ध्वानस्य च मध्ये विराजमानं मन्मथोद्दीपकत्व-लक्षणं साधारणं धर्मम् अवलम्ब्य अन्तर्लीनमुद्रया प्रतीतिमवतीर्णा उपमालङ्कृतिः व्यङ्ग्यार्थोपरञ्जितैव समुपलभ्यते।

## २. भट्टोद्भटेन समाश्रितस्य गुणवृत्ति-लक्षणस्य शब्द-व्यापारस्य चर्चा

तत्र भवता भट्टोद्भटेन गुणवृत्तिभित्तिकं रूपकालङ्कारं लक्ष्य-लक्षणयोगेन स्वकीये काव्यालङ्कारसारसङ्ग्रहे ग्रन्थे विवृण्वता प्रोक्तं यथा–

**श्रुत्या सम्बन्धविरहात् यत् पदेन पदान्तरम्।**
**गुणवृत्तिप्रधानेन युज्यते रूपकं हि तत्।।**
**ज्योत्स्नाम्बुनेन्दुकुम्भेन ताराकुसुम-शारितम्**
**क्रमशो रात्रिकन्याभिर्व्योमोद्यानमसिच्यत।।** इति।।

तथा हि श्रुत्या सम्बन्धविरहात् यत् गुण-वृत्तिपदान्तरम् प्रधानेन पदेन युज्यते तत् रूपकं नाम काव्यालङ्कार इति कारिकान्वयः। अत्र रूपकालङ्कार-लक्षणे गुणवृत्ति-शब्दस्य प्रयोगं विदधता भट्टोद्भटेन ज्योत्स्नाम्बुनेत्यादिना पद्येन प्रदर्शिते च तदुदाहरणे अभिधातिरिक्तेन गुणवृत्तिव्यापारेण विहितो लक्ष्यलक्षणयो-मैत्रीबन्धः सुतरां शोभातिशयं समुन्मीलयति। विवृतश्चायमर्थो लघुवृत्ति-कृता प्रतिहारेन्दुराजेन। यथा–अत्र अम्बुशब्दः श्रुत्या निरन्तरार्थ-निष्ठ-शब्दव्यापारेण गोचरीकृते उदकत्वे वर्त्तमानः ज्योत्स्नाशब्देन सामानाधिकरण्यं नानुभवति अम्बुत्व-ज्योत्स्नात्वयोः एकार्थसमवायाभावात्। अतः अम्बुगताः शौक्ल्य-आह्लादकत्व-प्रसरण-शीलत्वादयो ये गुणाः तत्सदृश-ज्योत्स्नागत-गुणवृत्तिः सन् अम्बुशब्दो

ज्योत्स्नायां वर्त्तते। तेन अम्बुशब्दस्य श्रुत्या निरन्तरार्थनिष्ठेन अभिधात्व्यापारेण यः पदान्तरेण ज्योत्स्नाशब्देन सम्बन्धः तच्छून्यत्वात् गुणवृत्तिता। अतोऽत्र रूपकतेति।

एवमेव अभिधातिरिक्तेन अवगमात्मना शब्द-व्यापारेण संवलितं पर्यायोक्तमलङ्कारं लक्ष्यलक्षण योगेन विवृण्वता प्रोक्तम् यथा-

**पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते।**
**वाच्य-वाचक-वृत्तिभ्यां शून्येनावगमात्मना।।**
**येन लम्बालकः सास्रः कराघातारुणस्तनः।**
**अकारि भग्नवलयो गजासुर-वधूजनः।।**

अत्र लक्षणकारिकायां निर्दिष्टम् "अन्येन प्रकारेण" इत्यंशं स्वयमेव "वाच्य-वाचक-वृत्तिभ्यां शून्येन अवगमात्मना" इत्यनेन शब्देन विशदीकुर्वता तत्र भवता भट्टोद्भटेन व्यञ्जनाव्यापारं प्रति सुस्पष्टमेव स्वकीयः श्रद्धातिशयः प्राकाश्यमानीतः। उदाहरणश्लोके चात्र कार्यरूपाः लम्बालकत्वादयः कारणभूतं गजासुरवधं वाच्यवाचकवृत्तिभ्यां शून्येन अवगमात्मना व्यापारेण प्रतीतिपदवीं प्रापयन्तीति पर्यायोक्तस्य अलंकारस्यात्र काव्ये शोभा समुन्मीलति।

### भट्टोद्भटमते अलङ्कारमुखेनैव रसादीनाम् अवगमः

इदन्तावत् तत्र भवतो भट्टोद्भटस्य सुप्रथितं दर्शनं यद् रस-भाव-तदाभासादीनां सर्वेषामेव स्वशब्दाभिधानद्वारेण विविधानाम् अलङ्काराणां नेपथ्यमवलम्ब्य प्रकाशनम्। तथा हि प्रेयस्वत्-समाख्ये अलङ्कारे सर्वेषामेव भावसम्वलितानां काव्यानां समाहितालङ्कारे च रसभाव-तदाभासानां प्रशमेन संवलितानां काव्यानाम्, ऊर्जस्वि-समाख्ये अलङ्कारे च कामक्रोधादिकारणात् अनौचित्य-प्रवृत्तानां भावानां रसानां च वर्णनेन सम्वलितानां काव्यानां, रसवदलङ्कारे च शृङ्गारादीनां रसानां, स्थायिनां, सञ्चारिणाम्, विभावानाम्, अनुभावानाञ्च स्व-स्व-शब्दमुखेन सम्वलितस्य अशेषस्य काव्योपारूढ-वर्णन-प्रकारस्य कुक्षीकारः स्वीकृतः समुपलभ्यते। अप्रस्तुतप्रशंसा-समासोक्त्यादिषु अलङ्कारेषु गुणीभावमुपागतानां व्यङ्ग्यार्थानां पर्यायोक्तालङ्कारे च सर्वस्यैव ध्वनिप्रपञ्चस्य समावेशः कृतः। विवृतश्चायमर्थः सविस्तरं प्रतिहारेन्दुराजेन लघुवृत्तौ।

### ३. आचार्य-दण्डिना गुणालङ्काराभ्यां कृतस्य प्रतीयमानार्थपरिग्रहस्य चर्चा

काव्यादर्शकृता आचार्येण दण्डिना गुणविवेचनप्रकारेण उदारताख्यं गुणं लक्ष्यलक्षणयोगेन निरूपयता प्रोक्तं यथा-

**उत्कर्षवान् गुणः कश्चित् यस्मिन्नुक्ते प्रतीयते।**
**तदुदराह्वयं तेन सनाथा काव्यपद्धतिः।।**

**अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत्।**
**तदवस्था पुनर्देव! नान्यस्य मुखमीक्षते।।**

इत्यभिधाय प्रतीयमानस्य वैयञ्जनिकस्य स्वीकृतिः स्पष्टमेव सङ्कीर्त्तिता। तथा हि उदाहरणे वदान्यशिरोमणेः कस्यचिद् बुद्धिस्थत्वेन उपलक्षितस्य राज्ञः सकाशात् मनोरथ-पथातिगं दानमासाद्य कृतार्थेन केनचित् अर्थिना निबद्धे अस्मिन् स्तुतिवाक्ये वर्ण्यमानस्य दानस्य यन्माहात्म्यं सहृदयानां प्रतीतिम् अवतरति तत् खलु अभिधातिरिक्तया प्रतीयमुद्रयैवेति स्पष्टम् अवसीयते।

एवमेव लक्ष्यलक्षणयोगेन व्यतिरेकालङ्कारं निरूपयता प्रतीयमान-सादृश्य-संवलिते वर्णने उपमानोपमेययोः यत्र भेदस्य अभिधानं तत्र व्यतिरेकालङ्कार-प्रथा जागर्त्तीत्यभिधाय

**अभ्रूविलासमस्पृष्टमदरागं मृगेक्षणम्।**
**इदं तु नयनद्वन्द्वं तव तद्गुणभूषितम्।।**

इत्यनेन पद्येन तस्योदाहरणं प्रदर्शयति। अत्र मृगेक्षणस्य नायिकेक्षणस्य मध्ये विराजमानं सादृश्यं विरुद्धधर्मेण प्रतीयमानं सत् चमत्कार-मातनोति।

एवमेव लक्ष्यलक्षणयोगेन समासोक्ति-नामकं काव्यालङ्कारं विशदीकुर्वता--

**वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः।**
**उक्तिः सङ्क्षेपरूपत्वात् सा समासोक्तिरिष्यते।।**
**पिबन् मधु यथाकामं भ्रमरः फुल्लपङ्कजे।**
**अप्यसंनद्धसौरभ्यं पश्य चुम्बति कुड्मलम्।।**

अत्रोदाहरणे प्रौढायां नायिकायां बद्धानुरागस्य नायकस्य कस्याञ्चिद् बालायां नायिकायाम् अप्रस्तुत-भ्रमर-व्यापारमुखेन वर्ण्यमाना सम्भोगाभिलाषप्रवृत्तिः व्यङ्ग्यमुद्रयैव सवासनानां सभ्यानाम् अधिमानसं सचमत्कारम् अवतरन्ती अभिधातिरिक्तस्य व्यञ्जनाख्यस्य शब्दव्यापारस्य कार्यकारित्वं निगूढतया प्रमाणयति।

एवमेव यत्र अलौकिकं लोकसीमातिक्रान्तं महाशयत्वं विभूतिमत्त्वं वा सचमत्कारं वर्णनम् अधिरोहति तत्र उदात्तालङ्कारस्य च्छाया समुन्मीलति। इत्येवम् उदात्तालङ्कारस्य वैशिष्ट्यम् अभिधाय उदाहरति च अधस्तनेन श्लोक-द्वयेन। यथा–

**गुरोः शासनमत्येतुं न शशाक स राघवः।**
**यो रावणशिरश्छेद-कार्यभारेऽप्यविक्लवः।।**
**रत्नभित्तिषु सङ्क्रान्तैः प्रतिबिम्ब-शतैर्वृतः।**
**ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जने येन तत्त्वतः।।** इति।।

अत्र उदाहरणत्वेन प्रदर्शितयोः श्लोकयोरनयोर्मध्ये पूर्वत्र मर्यादापुरुषोत्तमस्य रामस्य आशयमाहात्म्यम् परत्र च लङ्केश्वरस्य रावणस्य ऐश्वर्य-माहात्म्यम् "सुव्यञ्जितम्" इति कण्ठतो ह्येव अभिधाय स्वीकृतैव व्यञ्जनाख्या तुरीया वृत्तिरिति वैशद्यम् उपयाति।

किञ्च वाच्यवृत्त्या ग्राम्याणां निष्ठ्यूतोद्गीर्णवान्तादीनां शब्दानां गौणवृत्त्या कृते प्रयोगे किमपि सौन्दर्याधिक्यं प्रादुर्भवतीति प्रतिपादयता दण्डिना आचार्येण गौणीवृत्तिः स्पष्टमेव समाहतेति लभ्यते। तथा हि–

**निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम्।**
**अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते।।**
**पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः।**
**भूयो वमन्तीव मुखैरुद्गीर्गारुण-रेणुभिः।।**
**इति हृद्यम्, अहृद्यन्तु निष्ठीवति वधूरिति!**

इति सार्द्धश्लोकद्वयेन काव्यशोभासम्पत्तये गौणीवृत्तिः स्वीकर्त्तव्येति तन्मतं प्रकाशते।

इत्थम् अभिधातिरिक्तेन गुणवृत्तिव्यापारेण व्यञ्जनावृत्ति-व्यापारेण च काव्येषु सौन्दर्यं किमपि लब्धास्पदं भवतीति आचार्यस्य दण्डिनो मतम् अवसीयते।

### ४. आचार्येण वामनेन गुणालङ्काराभ्यां कृतस्य व्यङ्ग्यार्थ-परिग्रहस्य चर्चा

रीतिगुण-प्रस्थान-प्रतिष्ठापकेन वामनाचार्येण वक्रोक्ति-समाख्यम् अलङ्कारं लक्ष्यलक्षणयोगेन निरूपयता प्रोक्तं यथा–"सादृश्याल्लक्षणा वक्रोक्तिः।" यथा--

उन्मिमील कमलं सरसीनां कैरवञ्च निमिमीलमुहूर्त्तात्। सादृश्यमूलाय लक्षणायाः स्थले वक्रोक्तिर्नाम काव्यालङ्कारः शोभम् आतनुते। अत्रोदाहरणे सादृश्यभित्तिकायाः लक्षणायाः प्रसादेन उन्मीलन-निमीलनाभ्यां पदाभ्यां सङ्कोच-विकासात्मनोः अर्थयोः आविर्भवन्ती प्रतीतिः वक्रोक्ति-समाख्यम् अलङ्कारम् अभिद्योतयति।

किञ्चानेन दीप्तिरसत्वं कान्तिरिति कान्तिनामकम् अर्थगुणं लक्षयित्वा "दीप्ता रसाः" शृङ्गारादयो यस्य स दीप्तरस इत्येवं तस्य विवरणं कुर्वता सर्वेषामेव रसानां भावानाञ्च तत्रैव अङ्गीकृतः अन्तर्भावः। कामधेनुकारेणात्र लक्षणघटकस्य दीप्तशब्दस्य विवरणं कुर्वता "विभावानुभाव-व्यभिचारिभिरभिव्यक्तः" इत्येवंरूपोऽर्थः स्पष्टीकृतः। कान्तिगुणस्य उदाहरणत्वेन मूले–

**प्रेयान् सायमपाकृतः सशपथं पादानतः कान्तया**
**द्वित्राण्येव पदानि वासभवनाद् यावन्न यात्युन्मनाः।**

**तावत् प्रत्युत पाणिसम्पुटगलन्नीवीनितम्बं धृतो**
**धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः।।**

इति सुप्रसिद्धं पद्यमुदाहृतं यत्र विप्रलम्भपूर्वकः सम्भोगशृङ्गारः स्वहृदयेभ्यः स्वदते। इत्थम् अभिधानविच्छित्तिसम्पादनाय लक्षणायाः गुणवृत्तेः व्यञ्जनायाश्च स्वीकृतिमधिकृत्य वामनाचार्यस्य मतस्थितिः वैशद्यमुपयाति।

**रुद्रटाचार्येण भावालङ्कारकुक्षौ गर्भितस्य व्यङ्ग्यार्थस्य चर्चा**

रुद्रटाचार्येण काव्यालङ्कारे भावालङ्कारस्य लक्षणद्वयं प्रणीय तत्र व्यङ्ग्यार्थस्य समावेशं कृतवान्। तत्र तस्य प्रथमं लक्षणं यथा–

**यस्य विकारः प्रभवन्नप्रतिबन्धेन हेतुना तेन।**
**गमयति तदभिप्रायं तत्प्रतिबन्धं च भावोऽसौ।।**

अस्योदाहरणं यथा–

**ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।**
**पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया।।**

अत्र नायिकाया मुखच्छायाम्लानिः प्रादुर्भवन्ती नायकस्य वञ्जुललताकुञ्ज-लक्षणे सङ्केत-स्थले अनुपस्थित्या जायमानं विषादस्वरूपं वस्तुम्लानिकारणतया अवगमयति। अस्य द्वितीयं लक्षणं यथा–

**अभिधेयमभिदधानं तदेव तदसदृशगुणदोषम्।**
**अर्थान्तरमवगमयति यद् वाक्यं सोऽपरो भावः।।**

अस्योदाहरणं यथा–

**एकाकिनी यदबला तरुणी तथाह-**
**मस्मिन् गृहे गृहपतिश्च गतो विदेशम्।**
**कं याचसे त्वमिह वासमियं वराकी**
**श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ!।।**

अत्र वाच्येन वासनिषेधेन वासाभ्यनुज्ञां लक्षणो विधिः व्यञ्जनया प्रतीतिमारोहति।

इत्थं ध्वनिशब्दमनुच्चार्यापि अभिधातिरिक्तेन विविधेन शब्दव्यापारेण व्यङ्ग्यार्थप्रतीतिमूलं विविधमलङ्कारप्रकारं समुचितेन उदाहरणयोगेन व्युत्पादयतां, तन्मुखेनैव च रसादिसंवलितस्य

काव्यार्थसन्दोहस्य सहृदय-हृदय-हारिणीं रमणीयां प्रतीतिमुपपादयताम्, आगन्तुकानां ध्वनिवादिनां नव्यानाम् आलङ्कारिकाणां दिगुन्मीलनं कृतवतां तत्र भवतां भामहादीनाम् अलङ्कार-तन्त्र-प्रजापतीनाम् अन्तर्लीन-व्यङ्ग्यार्थ-सर्वस्वस्य चिन्तनसन्तानस्य निदर्शिका-ध्वनितत्त्व-विमर्शस्यवेदीबन्ध-प्रख्यासाम्प्रतं परिसमाप्तिमुपनीयते।

**अतिगम्भीरे दुर्गमनानाशास्त्रोत्थवादसंच्छन्ने।**
**ध्वन्यध्वनिसञ्चरतो भूयान्मे भारती शरणम्।।**

**साम्प्रतं प्रकृतमनुसरामः**

क्रैस्तसम्वत्सरस्य नवम्यां शताब्द्याम् प्रादुभार्वम् उपागतः श्रीमदानन्दवर्धनाचार्यः युगप्रवर्त्तकं ध्वन्यालोकनाम्ना सुप्रसिद्धं ग्रन्थरत्नं निर्माय विविधाभिर्युक्तिभिः परमतं निरस्य अस्फुटस्फुरितं ध्वनिलक्षणं काव्यात्मतत्त्वं च प्रतिष्ठाप्य काव्यालोचनजगति अक्षयो ज्ञानमयः प्रदीपः प्रज्वालितः। सोऽयं ध्वनिसिद्धान्तस्य व्याख्यानभूतो ग्रन्थः काव्यस्य रहस्यभूतं तत्त्वं बुभुत्सूनां सहृदयानां परिषत्सु चिराय संसेव्यमानो विराजते। उद्योत-चतुष्टयात्मना प्रविभक्ते ग्रन्थेऽस्मिन् साङ्गोपाङ्गस्य ध्वनितत्त्वस्य तदितरस्य च प्रसक्तानुप्रसक्तस्य विषय-जातस्य सुविशदं सोदाहरणं सोपपत्तिकञ्च विवेचनं ग्रन्थकृता तथा विहितम् उपलभ्यते यथा गुणालङ्कारौचित्य-समुपस्कृत-शब्दार्थ-पृष्ठपाती ध्वनिः सौरालोकविन्यस्त-करामलकवत् सुस्पष्टं शेमुषीसरणिम् अवतरति सहृदयानाम्।

ध्वनिशब्दश्चायं तत्र भवता महाभाष्यकारेण पतञ्जलिना स्फोटात्मकस्य नित्यस्य शब्दस्य व्यञ्जकत्वेन समुच्चार्यमाणेषु शब्देषु प्रथमं प्रयोगम् उपनीतो दृष्टिपथम् अवतरति। ततश्च विद्वद्गोष्ठीषु कनिष्ठिकाग्र-पर्वालङ्कारभूतानां वैयाकरणानां सिद्धान्तम् अनुसरद्भिः काव्यालोचनचणैरपि तिरस्कृतवाच्यार्थस्य व्यञ्जनैकवेद्यस्य काव्यात्मभूतस्य अर्थस्य व्यञ्जके शब्दार्थ-युगले ध्वनिव्यवहारः प्रवृत्तिमानीतः। एतावता ध्वनिशब्दस्य काव्यात्मतया अत्र प्रयोगम् अधिकृत्य सम्भावितस्य असान्दृष्टिकत्वशङ्कातङ्कस्य निराकरणं कृतम्भवति। ध्वनिशब्दश्चायं व्युत्पत्ति-भेदेन अधोनिर्दिष्टेषु पञ्चसु अर्थेषु लोचन-कृता प्रयोगपदवीम् उपनीता विलोक्यते। तथाहि- ध्वनतीति कृत्वा वाच्योऽर्थो वाचकः शब्दश्च ध्वनिः, ध्वन्यते इति कृत्वा व्यङ्ग्यो रसादिश्च ध्वनिः, ध्वननं ध्वनिः इति कृत्वा व्यञ्जनाव्यापारोऽपि ध्वनिः, अनुपदम् उक्तस्य चतूरूपस्य ध्वनेः सत्त्वात् काव्यपदव्यपदेश्यश्चार्थो ध्वनिः इति स्पष्टं भवति।

तत्र-

**स्वरूपं विषयश्चैव सङ्ख्या कालस्तथाश्रयः।**
**निमित्तञ्चेति षट् प्रोक्ताः वाच्याद् व्यङ्ग्यस्य भेदकाः।।**

इत्यभियुक्तोक्तिप्रामाण्यात् स्वरूपतः, विषयतः, निमित्ततः, सङ्ख्यातः, कालतः, आश्रयतश्च व्यङ्ग्योऽर्थः वाच्यार्थात् नितरां भिन्नत्वेन सहृदयानां प्रतीतिमवतरति। तत्र स्वरूपतो यथा- "भम

धम्मिअ"–इत्यादि-प्राकृतगाथायां विधिस्वरूपो वाच्यार्थः निषेधस्वरूपं व्यङ्ग्यार्थं व्यञ्जनया बोधयति। विषयतो यथा– "कस्स व ण होइ रोसो" इत्यादि-प्राकृतगाथायां वाच्यस्य नायिका विषयः, व्यङ्ग्यस्य तु नायको विषय इत्येवंविधो वाच्याद् भिन्नो व्यङ्ग्योऽर्थः व्यञ्जनया प्रतीयते। सङ्ख्यातो यथा– "गतोऽस्तमर्कः" इति वाक्याद् सायङ्कालप्राप्ति-रूपः एकसङ्ख्यक एव वाच्योऽर्थः सम्बोध्य व्यक्तिभेदाद् व्यञ्जनया बहुसङ्ख्यकः सन् प्रतीत्युपारूढो भवति। कालतो यथा– शून्यं वासगृहम्–इत्यादौ काव्ये वाच्यार्थस्य प्रथमं बोधः सञ्जायते तदनन्तरं पार्यन्तिक-प्रतीतिविश्रान्तिधामतया ब्रह्मास्वादप्रख्यः सम्भोग शृङ्गाररसास्वादो व्यञ्जनया साक्षिभास्यतया रसिकैः साक्षात्क्रियते आश्रयतो यथा वाच्यार्थस्य आश्रयः केवलं शब्द एव परन्तु व्यङ्ग्यार्थस्य आश्रयः शब्दतदेकदेशतदर्थ-वर्ण-सङ्घटनादिकं तत्त्वजातमिति स्पष्ट एवाश्रयकृतो वाच्याद् व्यङ्ग्यार्थस्य भेदः। निमित्ततो यथा वाच्यार्थः सर्वेषामेव शब्दार्थशासनविदां वेद्यो भवति परन्तु व्यङ्ग्योऽर्थः सहृदयानामेव वेद्यो भवति।

इत्थं योऽयं सहृदयश्लाघ्यः प्रतीयमानापरपर्यायो ध्वनिः स खलु वाच्यार्थात् सर्वथा भिन्नत्वेन प्रतिभासमानः रसादिप्रधानेषु महाकवीनां काव्यसन्दोहेषु सवासनानां सामाजिकानाम् अधिमानसम् अवतरतीति प्रमाणप्रतिपन्नं भवति। विवृतश्चायमर्थो दृष्टान्तयोगेन ध्वनिकृता यथा–

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।**

यथा अङ्गनासु प्रसिद्धेभ्यः सालङ्कारेभ्यः करचरणादिभ्योऽवयवेभ्यः सर्वथा पृथक्त्वेन सर्वाङ्गविसृत्वरं सहृदयलोचनामृतं लावण्यं, मुक्ताफलेषु च्छायायास्तरलत्वमिव, चकास्ति तद्वत् महाकवीनां वाग्विन्यासेषु सङ्केतितं वाच्यार्थमाश्रित्य लब्धाविर्भावैः अलङ्कारादिभिः पृथक्त्वेन बुद्ध्युपारूढं प्रतीयमानलक्षणं किमपि तत्त्वान्तरं सकलमेव काव्यकलेवरम् अभिव्याप्य विद्योतत इति ध्वनिकृतां हार्दम् अवसीयते।

तत्र प्रतीयमानस्यार्थस्य वस्त्वलङ्कार-रसात्मना त्रैविध्येऽपि योऽयं रसादिलक्षणः तृतीयकोटिकः प्रतीयमानोऽर्थः तस्यैव काव्यात्मत्वम् इतिहासमुखेन प्रतिपादयता ध्वनिकृता प्रोक्तं यथा–

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।।**

अत्र क्रौञ्चमिथुनात् एकस्य काममोहितस्य क्रौञ्चस्य व्याधकृतेन एकस्य काममोहितस्य वधेन रुदतीं क्रौञ्चीं विलोक्य हृदयसंवादमहिम्ना तन्मयत्वमापन्नस्य आदिकवेः वाल्मीकेः लौकिकशोक-व्यतिरिक्तः स्थायिभावात्मा शोकः करुणरसरूपेण आस्वाद्यमानः सन् आवेशवशात् परिपूर्ण-कुम्भोच्चलन वत् श्लोकरूपेण अभिव्यक्तिम् उपाजगामेति तदर्थः प्रतीयते। सोऽयं काव्यसर्वस्वभूतोऽर्थः केवलं सहृदयानां, न तु रत्यादिवासनाविधराणां जरन्मीमांसकादीनामपि, विभावादिमुखेन आस्वादपदवीम् अवतरति। सहृदयाश्च "येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवन-योग्यता

ते हृदयसम्वादभाज:" इति लोचनोक्ते लक्षणलक्षिता: यत्सत्यम् ईदृशा: पुण्यभाजो विरला ह्येव जगत्यस्मिन् जाग्रति।

इत्थं वाच्याद् विभिन्नविषयत्वेन स्थितस्य काव्यात्मभूतस्य ध्वने: लक्षणं निर्दिशन् ध्वनिकार: प्राह:–

**यत्रार्थ: शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्त: काव्यविशेष: स ध्वनिरिति सूरिभि: कथित:।।**

अस्या: कारिकाया: एवं खलु लोचनकृद्दिशा सरलार्थ: स्पष्टीभवति यथा– काव्ये अर्थ-निरपेक्षस्य केवलस्य शब्दस्य नास्ति व्यञ्जकत्वम् एवमेव शब्दनिरपेक्षस्य केवलस्य अर्थस्यापि नास्ति व्यञ्जकत्वम्। तस्मात् शब्दस्य व्यञ्जकत्वे अर्थस्य, अर्थस्य च व्यञ्जकत्वं शब्दस्य सहकारिता अभ्युपेयते। इत्थम् इदमत्र उक्तं भवति अविवक्षितवाच्ये लक्षणामूले ध्वनौ शब्दस्यैव व्यञ्जकत्वेऽपि अर्थस्य सहकारिता न हीयते, एवं विवक्षितान्यपरवाच्ये अभिधामूले ध्वनौ अर्थस्यैव व्यञ्जकत्वेऽपि शब्दस्य सहकारिता न हीयते। इदमेव हार्दम् अभिप्रेत्य कारिकायां "यत्रार्थ: शब्दो वा" इत्यत्र विकल्पबोधकस्य वेत्यव्ययस्य "व्यङ्क्त:" इति द्विवचनान्तस्य क्रियापदस्य च प्रयोग: साङ्गत्यमासादयति। तदुक्तं लोचनकृता–

"विशिष्टशब्दाभिधेयतया विना तस्यार्थस्य अव्यञ्जकत्वादिति सर्वत्र शब्दार्थयोरुभयोरपि ध्वननं व्यापार:...। अर्थ: शब्दो वेति विकल्पाभिधानन्तु प्राधान्याभिप्रायेण" इति।

अत्र योऽयं ध्वनिलक्षण: अर्थ: काव्यस्य आत्मत्वेन व्यवस्थापित: स खलु गुणालङ्कारौचित्य-सुन्दर-शब्दार्थ-शरीरमनुप्रविश्यैव प्रतिष्ठां लभते। अन्यथा ध्वन्यमानार्थ-सद्भावमात्रेणैव यदि काव्यरूपता स्यात् तदा सिंहो माणवक इत्यत्रापि तेजस्वित्वरूपस्य ध्वन्यमानस्य अर्थस्य सद्भावात् प्रादुर्भवन्ती काव्यरूपता कथङ्कारं निवार्येत? तस्मात् आत्मनो विभुत्वेन सर्वमूर्त्त-द्रव्य-संयोगित्वाद् घटेऽपि सत्त्वेन तत्र यथा इन्द्रिय-मनो-बुद्धि-लक्षणस्य विशिष्टस्य अधिष्ठानस्य विरहात् नैव भवति जीवव्यवहार: तथैव "सिंहो माणवक:" इत्यत्र ध्वनिलक्षणस्य आत्मतत्त्वस्य सद्भावेऽपि गुणालङ्कारौचित्य-सुन्दर-शब्दार्थ-स्वरूपस्य अधिष्ठानस्य विरहान्न तत्र काव्यरूपतापत्तिरिति लोचनकृतां विवरणेन सुस्पष्टम् प्रमाणप्रतिपन्नं भवति।

इत्थं ध्वन्यालोकग्रन्थेन व्यञ्जनैकवेद्यस्य विविध-प्रभेद-भिन्नस्य ध्वनितत्त्वस्य महता समारोहेण समनुष्ठिते प्रतिष्ठामहोत्सवे ध्वनिसिद्धान्तस्य परिपन्थिनां ये खलु उच्चावचप्रकारा: विप्रलापा: विविधेभ्यो भागेभ्य: प्रादुर्भावम् उपागता: तेषां सयुक्तिकं निराकरणं ग्रन्थकृता ध्वन्यालोके, लोचनकृता च लोचने कृतम् उपलभ्यते। साम्प्रतं मूलवर्ती नितरां वितत: तत्प्रसङ्ग: अधस्तात् क्रमश: समासत: प्रस्तूयते।

(i) व्यञ्जनावलम्बिनोऽलंकार्यस्य बहुव्यापकस्य ध्वनेः वाच्यार्थमूलेन व्याप्येन अलङ्कारेण परिग्रहो युक्तिविरुद्धत्वात् विचारसरणिं नावतरति। अनेन प्रकारेण ध्वन्यमानस्य अर्थस्य परैः आपादिता अलङ्कारेण गतार्थता निराकृता।

(ii) उपचारमात्रस्वरूपया भक्त्या व्यङ्ग्यार्थप्राणस्य ध्वनेः अभेदकथनं तयोः रूपभेदात् न क्षोदक्षमम्। अनेन भक्त्या ध्वनेः आपादितस्य एकत्वस्य निराकरणं कृतम्।

(iii) "यत्रार्थः शब्दो वेत्यादिना" ध्वनेः सामान्यलक्षणस्य, "अर्थान्तरे सङ्क्रमितम्" इत्यादिना च विशेषलक्षणस्य प्रतिपादनेन ध्वनेरनिर्वचनीयतापत्तिरपि निराकृता।

(iv) येऽपि अन्विताभिधानवादिनः प्रभाकराः "यत्परः शब्दः स शब्दार्थः" इति मनसि निधाय दीर्घदीर्घतरेण अभिधाव्यापारेणैव तृतीयकक्षावगाहिनोऽथवा चतुर्थकक्षावगाहिनो व्यङ्ग्यार्थस्य वाच्यविधयैव प्रतीतिं प्रख्यापयन्ति तेऽपि न समीक्ष्यवादिनः, व्यङ्ग्यार्थे अभिधाकृतस्य सङ्केतस्य विरहात्।

(v) येऽपि अभिहितान्वयवादिनः पदार्थान्वयद्वारा वाक्यार्थबोधाय तात्पर्याख्यां वृत्तिम् अभ्युपयन्ति, तयैव च वृत्त्या व्यङ्ग्यार्थस्य बोधमपि अकुण्ठेन कण्ठेन उद्घोषयन्ति तेऽपि न परीक्ष्यवादिनः, यतो हि अभिधावृत्त्या जायमाना या वाच्यार्थप्रतीतिः सा तावत् सर्वेषामेव शब्दशास्त्र-कृतश्रमाणां समानाकारेणैव बुद्धिमारोहति परन्तु वाच्यार्थात् सुतरां पृथग्भूतेन अवगमात्मना व्यञ्जनाव्यापारेण परिस्फुरन्ती येयं द्वितीया प्रतीतिः सा खलु सवासनानामेव सभ्यानां प्रकरणादिमहिम्ना नानात्मना बुद्धिमारोहति। किञ्चास्य व्यङ्ग्यार्थस्य अवगतिः सङ्गीतस्य मनोभाव-वैविध्य-व्यञ्जकस्य मुखमुद्रा-विशेषस्य, लीलापद्म-निमीलनादिरूपस्य चेष्टाविशेषस्य च महिम्ना नेपथ्यवैविध्यम् आकलयन्ती समुन्मीलति। तस्मान्नार्हतीयम् अवगमनशक्तिः अभिधावृत्त्या समं समशीर्षिकां लब्धुम्।

(vi) तात्पर्यशक्त्या ध्वनिं गतार्थयितुं बद्धपरिकराः पुनरेवं प्रत्यवतिष्ठन्ते। तेषाम् उक्तिमङ्गी इत्थं प्रकाश्यम् उपयाति। यथा "भ्रम धार्मिक" इत्यादि प्राकृत-गाथायां प्रथमस्यां कक्षायाम् अभिधया पदार्थबोधः द्वितीयस्यां कक्षायां तात्पर्यशक्त्या पदार्थानाम् अन्वये सम्पन्ने तृतीयस्यां व्यङ्ग्यार्थबोधः ध्वनिवादिनां मते समुद्-भवति तथैव पुत्रम् प्रति "विषं भुङ्क्ष्व, मा चास्य गृहे भुङ्क्थाः" इति पितुः उपदेशवाक्येऽपि कोटित्रयावगाहिनी अर्थप्रतीतिः समुद्भवति। सा चैवं यथा प्रथमस्यां कक्षायां पदार्थानाम् अभिधया विशकलितो बोधः, द्वितीयस्यां कक्षायां विषभक्षणनिषेधस्य बोधः इत्येवं रूपेण तात्पर्यार्थस्यापि तृतीयकक्षाविषयत्वं प्रतिपाद्य व्यङ्ग्यार्थेन समं तात्पर्यार्थस्यापि अभिन्नत्वं प्रतिपादयन्ति।

परन्तु व्यङ्ग्यार्थ-तात्पर्यार्थयो र्निष्पत्तिकोटिम् अधिकृत्य तात्पर्यवादिना यन्निदर्शनं प्रदर्शितं तत्खलु दृष्टान्त-दार्ष्टान्तिकयोः साम्यं नैव विभर्त्ति। तथाहि ध्वनिवादिनां नये अभिधया पदार्थ-बोधानन्तरं "विषं भुङ्क्ष्व" इत्यादि वाक्यात् "एतद्गृहे भोजनं मा कार्षीः" इत्येवं रूपो यः खलु

वाक्यार्थः स तावत् द्वितीयस्यामेव कक्षायां समुन्मीलितः सन् विश्रान्तिमुपैति। तस्मादत्र निषेधकक्षैव द्वितीयकक्षेति कोऽवकाशः तृतीयस्याः कक्षायाः? तस्मात् पदार्थानाम् अन्वयस्य विधात्री तात्पर्यशक्तिः व्यङ्ग्यमर्थं बोधयितुं नैव सामर्थ्यं बिभर्त्तीति स्थितम्।

(vii) अनुमिति-रसिकः महिमभट्टः "भम धम्मिअ"-इत्यादि-गाथायां विधिपदकस्य वाच्यार्थस्य यद् "मा भ्रम" इति व्यङ्ग्यपरकतया ध्वनिवादिभिर्व्याख्यानं क्रियते तदस्मै न रोचते। व्यङ्ग्यार्थ-वाच्यार्थयोर्मध्ये तन्मतेन व्याप्तिमूलकस्य सम्बन्धस्य सद्भावात् पक्षसत्त्व-सपक्षसत्त्वविपक्षव्यावृत्तत्वरूपात् त्रिरूपाल्लिङ्गात् यत् लिङ्गिनः साध्यस्य ज्ञाने तत् अनुमानात्मकमेवेति तस्य मतस्थितिः। गो.भी.सिं. तथा हि मम्मटेन तन्मतम् इत्थम् उपस्थाप्य निराकृतम्। यथा गृहे श्वनिवृत्त्या विहितं भ्रमणं गोदावरीतीरे सिंहोपलब्धेः यत् अभ्रमणम् अनुपायति तत्र हेतोर्दुष्टत्वात् अनुमानं नैव प्रसर्त्तुम् ईष्टे। तथा हि भीरोऽपि गुरोः प्रभोः वा निदेशेन कारणान्तरेण च सत्यपि भयहेतौ भ्रमणस्य कर्त्तृत्वं नैव तावन्न कल्पयितुं शक्यम्। एवमयम् हेतुः व्यभिचारपराहतः शुनो बिभ्यदपि वीरत्वेन सिंहान्न विभेतीति विरुद्धाख्योऽपि हेतु दोषः अत्र प्रसरति, सिंहवत्व-भीरुभ्रमणाभावयोः सामानाधिकरण्यविरहात्। किञ्च गोदावरीतीरे सिंहसद्भावस्य अनाप्रोक्तत्वेन अनिश्चयाक्रान्तत्वात् व्याप्तिसिद्धेः खपुष्पायितत्वं स्पष्टमेव। ततश्चैवं विधात् असद्धेतोः साध्यसिद्धिप्रयासो व्यर्थ एवेति व्यङ्ग्यभूतानां रसादीनां बोधनेऽनुमानं नैव किमपि कौशलं कलयतीति स्थितम्।

इत्थं ध्वनिमधिकृत्य प्रायः सर्वेष्वपि विप्रलाप-प्रकारेषु युक्तिपुरस्सरं प्रथमं नीतेषु काव्य-स्यात्मस्थानीयो ध्वनिः श्रीमदानन्दवर्धनप्रसादात् निरस्ताशेषघनघटाटोपाज्योत्स्नेव शारदी, सहृदयानामधिमानसं कमप्यमन्दमानन्दमुन्मीलयन् विराजते।

तत्र लक्षणायाः करावलम्बमासाद्य समुत्थितो ध्वनिः अविवक्षितवाच्यनामा अर्थान्तरसङ्क्रमितनाम्ना अत्यन्ततिरस्कृतवाच्यनाम्ना च द्वैविध्यम् अश्नुते। एवम् अभिधायाः करावलम्बमासाद्य समुत्थितो ध्वनिः विवक्षितान्यपरवाच्यनामा असंलक्ष्यक्रमव्यङ्ग्यनाम्ना संलक्ष्यक्रमव्यङ्ग्यनाम्ना च द्वैविध्यम् अवगाहते। तत्र रसभावादिः सर्वोऽपि असंलक्ष्यक्रमव्यङ्गं ध्वनिप्रकारम् आविश्य समुन्मीलति। अत्र व्यङ्ग्यस्य रसादेः प्रतीतिस्तु विभावादि प्रतीत्युत्तरं समुद्भवति। ततश्च अनयोः प्रतीत्योः क्रमस्तु विद्यत एव परन्तु शतपत्रभेदनन्यायेन तयोः क्रमः सम्यङ् न लक्ष्यत इति कृत्वा असंलक्ष्य क्रमत्वमस्य उपपद्यते।

अत्र सरसस्य काव्यस्य श्रवणानन्तरं चतुर्दशतयीं कक्षां प्राप्य श्रोतुरात्मनि काव्यास्वादप्रभवः आनन्दांशप्रकाशः समुन्मिषतीति गोकुलनाथोपाध्यायेन स्वकीये काव्यप्रकाश-विवरणे यथा स्पष्टी कृतं तदत्र प्रसङ्गानुरोधात् प्रस्तूयते।

तथा हि "१. पदवाक्यानुसन्धानम्, २. पदार्थयोर्विभावानुभावयोः स्मरणम्, ३. अनुभावविशिष्टविभावानुभावः, ४. अनुभावव्यञ्जित-व्यभिचारिस्मरणम्, ५. व्यभिचारि-विशेषित-पूर्ववाक्यार्थस्य वैयञ्जनिक-बोधस्वरूपः काव्यारोहः, ६. अलङ्कारगुणचमत्काराणाम् आस्वादः, ७. विभावानुभाव-व्यभिचारिणां साधारण्येन स्मरणम्, ८. साधारणीकृतानामेव तेषां वैशिष्ट्यानुभवः स एव व्यभिचारिभावास्वादः, ९. तदनन्तरो वा व्यभिचारिभावाभेदेन आनन्दोल्लासः, १०. ततो रतिस्मरणम्, ११. अथ साधारणीकृत-विभावानुभाव-व्यभिचारिभिरुपबृंहितस्य रतिभावस्य अन्वयानुभवः, स एव स्थायिभावास्वादः, १२. तदनन्तरो वा तथाविध-रत्यभेदेन आनन्दानुभवः, १३. ततो रत्योः परस्परं शृङ्खलितविषयताकोऽनुभवः, स एव रसास्वादः, १४. तदनन्तरो वा विभावानुभाव-व्यभिचारिपरिबृंहित-रत्यभेदेन आनन्दांशप्रकाशः। एवं चतुर्दशतयीं कक्षामारूढो रस इति व्यपदिश्यते।" अस्त्वेतत्।

# बौद्धार्थनिर्णयः

डॉ. उमेशचन्द्रमिश्रः

लोके शब्दार्थयोरभेदेन व्यवहारो भवति। यथा घटमानय कथनेन अर्थस्यानयनं तथा घटमुच्चारयेति कथनेन घटशब्दस्योच्चारणं भवत्येव। तथैव शब्दस्य श्रवणोत्तरं कस्यचिद् तदर्थस्य ज्ञानं सम्भवति, कस्य च न। अनेन ज्ञायते शब्दार्थयोरवश्यमेव कश्चन सम्बन्धोऽस्ति यस्य ज्ञानेनैव शाब्दबोधो जायते।

नयोः शब्दार्थयोः सम्बधविषये शास्त्रकारेषु मतवैपरीत्यं दृश्यते। तत्र वैयाकरणानां मते इतरेतराध्यासः सङ्केतस्तन्मूलकं तादात्म्यञ्च सम्बन्धः शब्दार्थयोः तदुक्तं पातञ्जले महाभाष्ये–

**"सङ्केतस्तु पदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः" इति।**

(नागेशभट्टः सिद्धान्तमञ्जूषा) तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्। अभेदस्तत्राध्यासितः। न च शब्दार्थयोस्तादात्म्यस्वीकारे मधुशब्दोच्चारणे मुखे माधुर्यापत्तिः। वह्निशब्दस्योच्चारणे मुखे दाहापत्तिरिति वाच्यम्, भेदाभेदस्योपपादितत्वात्। वैयाकरणाः तु आन्तरस्फोटात्मकशब्दैः सह बौद्धार्थस्य क्रमशः बोधकतारूपं वाच्यवाचकभावापरपर्यायरूपं तादात्म्यसम्बन्धं स्वीकुर्वन्ति। तेषां मते स्फोटो द्विविधः आभ्यन्तरो बाह्यश्चेति। तत्र बौद्धशक्यार्थः आभ्यन्तरः। यथा निर्विभागस्य आभ्यन्तरस्फोटस्य वाचकत्वं तथैव निर्विभागस्यान्तरशक्यार्थस्यैव वाचकत्वम्, प्रतिभारूप एव स आन्तरशक्यार्थः प्रतिभा च बुद्धिविषयतारूपिण्येव। एवं शक्यार्थस्य केवलं बुद्धिविषयत्वं सिध्यति। अतः वैयाकरणानां मते बौद्ध एवार्थः शक्यः, पदञ्च स्फोटात्मकमेव, तयोस्तादात्म्यम् अत एव पतञ्जलिना योगसूत्रे समाधिपादे आह "शब्दज्ञानानुपातिवस्तुशून्यो विकल्पः"। अर्थात् शब्दज्ञानमात्रेणानुपाती बुद्धावनुपतनशीलो बाह्यवस्तुशून्यः बाह्यार्थरहितविशेषेण कल्प्यते इति विकल्पः–बुद्धिपरिकल्पितेति। अत एव मञ्जुषादौ उक्तमस्ति–

**एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।**
**कूर्मक्षीरचये स्नातः शाशशृङ्गधनुर्धरः।।**[१]

अत्र वन्ध्यासुतादीनां बाह्यार्थशून्यत्वेऽपि बुद्धिपरिकल्पितबन्ध्यासुतशब्दवाच्यार्थमादायार्थवत्त्वात् प्रातिपदिकत्वम्, न च अर्थवत्वाभावेन प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्, न च शशशृङ्गमित्यत्र शृङ्गे

१. परमलघुमञ्जूषा। शक्तिनिरूपणम्

शशीयत्वभ्रम इति तार्किकोक्तं समीचीनमिति वाच्यम्, शशशब्दवाच्यजन्तुदर्शनरूपबाधे सति शशशृङ्गं नास्तीति वाक्ये शशशृङ्गमित्यस्य प्रातिपदिकत्वानापत्तेः।

"तदस्यास्त्यस्मिन्निति मतुप्"[१] इति सूत्रे भाष्ये भगवता पतञ्जलिना उक्तम्–

"न सत्तां पदार्थो व्यभिचरति"[२] अतः पदार्थः सत्तायाः व्यभिचारी न भवति। कश्चिदपि पदार्थः सत्तया रहितो न भवति, पदार्थमात्रस्य सत्ताया एव स्वाभाविकार्थत्वात्। अतः बौद्धार्थास्वीकारे "घटोऽस्ति" इत्यस्य प्रयोगानापत्तिः "घटः" इति कथनेनैव घटस्य सत्तारूपार्थस्य सिद्धत्वात्। "न सत्तां पदार्थो आभ्यन्तरस्य एव वाचकः। बाह्यस्फोटो जातिव्यक्तिभेदरूपः। तथा शक्यार्थोऽपि आभ्यन्तरवाह्यभेदेन द्विविधः। तत्र व्यभिचरिष्यति" इति भाष्योक्तेः, "उक्तार्थानामप्रयोग" इति न्यायाच्च। ननु बौद्धार्थस्वीकार आवश्यक इति चेत्, सत्यम्, तदभावे "घटो नास्ति" इति प्रयोगाऽनापत्तेः। उक्तभाष्यानुसारेण "घटः" इत्यनेनैव "घटस्य सत्ता" इत्यर्थसिद्धौ तत्सत्तया अभावबोधनाय "नास्ती"ति प्रयोगस्य वैयर्थ्यापत्तेश्च। तेन "घटोऽस्ति" घटो नास्ति इत्यादिस्थलेष्वपि बाह्यसत्तायाः अस्तित्वबोधनाय "अस्ति इति" प्रयोगः बाह्यसत्तायाः अभावबोधनाय च "नास्ति" इति प्रयोगश्च सङ्गच्छते।

आचार्याः "तदस्यास्त्यस्मिन्निति मतुम्"[३] इत्यस्मिन् सूत्रे अस्तिग्रहणं बौद्धार्थाङ्गीकारे प्रमाणत्वेन प्रस्तूयन्ति, बौद्धपदार्थस्वीकारे गौः, घटः "इत्यादिप्रथमान्तपदानां न सत्ता पदार्थो व्यभिचरिष्यति" इति भाष्यप्रामाण्यबलात् सत्तासमाविष्टार्थसिद्धौ "तदस्यास्त्यस्मिन्निति मतुप्" इति[४] सूत्रे अतिग्रहणस्य वैयर्थ्यापत्तेः, गोमान् आसीत् प्रभृतिषु भूतकालिकवाक्येषु गोमान् भविता। इत्यादिषु भविष्यत्कालिकवाकेषु च बाह्यगोसत्तायाः अभावात् शाब्दबोधानापत्तेश्च। अतः "तदस्यास्त्यस्मिन्निति मतुप्" इति सूत्रे "अस्ति" ग्रहणं व्यर्थं सञ्ज्ञापयति यद् बुद्धिपरिकल्पितः बौद्धो वा शक्यार्थो भवति, तेन गोमान् आसीत् गोमान् भवति इत्यादिस्थलेष्वपि शाब्दबोधः। एवं बौद्धसत्तायां स्थितायामपि बाह्यसत्ताया अभावद्योतनाय च "घटो नास्ति" पदस्य सार्थक्यं भवति।

ननु "शशंशृङ्गं नास्ती" इति वाक्ये बौद्धार्थस्वीकारेणैव शाब्दबोध इति चेत् सत्यं बौद्धार्थानङ्गीकारदशायां शशशृङ्गे बाह्यशशशृङ्गस्य बाह्यसत्तारूपत्वाभावात् प्रातिपदिकसंज्ञानापत्तौ स्वाद्युत्पत्तिर्न स्यात्। अर्थवतो हि शब्दस्यैव प्रतिपदिक संज्ञा भवतीति पाणिनीयसिद्धान्तात्, बौद्धार्थं स्वीकृत्यैव "अर्थवदधातुरप्रत्यय प्रातिपदिकम्"[५] सूत्रेण प्रातिपदिकसंज्ञास्वाद्युत्पत्त्यादिकार्यसम्भवाच्च।

---

१. पा. सू. ५.२.६४
२. व्याकरणमहाभाष्यम् ५.२ आ. २ सू. ६४
३. पा. सू. ५.२.९४
४. पा. सू ५.२.९४
५. पा. सू. २.२.४५

बौद्धार्थाङ्गीकारे एव "शशशृङ्गं नास्ती" इति वाक्ये अभावज्ञाने आहार्यप्रतियोगिज्ञानं कारणमिति तार्किकैरुक्तम्। अन्यथा बौद्धार्थस्वीकारे नीलं सरोजं भवत्येव इत्यत्र एव शब्दस्य अन्ययोगव्यवच्छेदरूपार्थ-स्यानन्वयापत्तिः कमले नीलत्वयोस्या प्रसिद्धत्वात्, अप्रसिद्धप्रतियोगिका भावस्य तार्किकैरस्वीकाराच्च। नैयायिकानां मतानुसारेण यस्याभावः सः प्रतियोगी भवति। यथा घटाभावस्य प्रतियोगी घटः पटाभावस्य प्रतियोगी पटः। यस्याभावस्य प्रतियोगी अप्रसिद्धः स तार्किकैः न स्वीक्रियते। शशशृङ्गाभावस्य प्रतियोगित्वेन शशशृङ्गस्य लोकेऽप्रसिद्धित्वात् प्रयोगनिर्वाहस्य बौद्धशशशृङ्गस्य सत्ता तार्किकैरपि स्वीक्रियते। तेन शशशृङ्गं नास्ती"ति शशशृङ्गाभावस्य प्रतियोगि बुद्धिस्थं शशशृंङ्गम्भवति। यस्य बहिर्देशे नास्तीति शाब्दबोधः सङ्गच्छते। तथैव विजादिना अंकुरो जायते" इत्यादिष्वपि बौद्धार्थरूपेणैव शाब्दबोधो लोके प्रसिद्धः। अतो वैयाकरणाः शब्दस्य शक्यार्थरूपेण बौद्धार्थस्य सत्तामङ्गीकुर्वन्ति। भगवता पतञ्जलिना व्याकरणमहाभाष्ये "उपदेशेऽजनुनासिक इत्" इत्यस्मिन् सूत्रे उद्देशं लक्ष्यता उक्तम्–

"गुणैः प्रापणमुद्देशः तद्यथा– कश्चित् कंचिदाह देवदत्तं मे भवानुद्दिशतु इति। स इहस्थः पाटलिपुत्रस्थं देवदत्तमुद्दिशति "अङ्गदी कुण्डली किरीटी व्यूढोरस्को वृत्तबाहुलोहिताक्षस्तुङ्गनासो विचित्राभरण ईदृशो देवदत्त इति"[१] कथनम्भवति सादृश्यार्थ "ईदृश" पदस्य प्रयोगस्तत्रैव लभ्यते यत्र द्वयोः समानवस्तुनो निर्देशो भवति। अत्र एतादृशमन्यत् किमपि वस्तु नास्ति यस्य देवदत्ते सादृश्यं भवेत्। अत एवाऽत्र "ईदृशं" पदं निरर्थकमस्ति। न चात्र बौद्धार्थस्वीकर्तृणाम्मते ईदृशपदं निरर्थकमिति वाच्यम्, तेषाम्मते अङ्गदीप्रभृतिशब्देभ्यो बुद्धौ प्रतिभासितो योऽर्थस्तादृश एव बाह्यदेवदत्त इत्येव तद्वाक्यार्थत्वमसङ्गतेः। अत्र "ईदृश" शब्देन कुण्डलित्वादिधर्मैः सह प्रत्यभिज्ञाविषयत्वमुपलक्षते। अर्थात् अङ्गदी कुण्डलीत्यादि शब्दैर्बुद्धौ योऽर्थो भाषितो भवति तस्यैव प्रत्यभिज्ञा "ईदृश" शब्देन भवति। अनेन बौद्धवाह्यार्थयोर्भेदाऽपि सूच्यते।

बौद्धपदार्थस्य स्पष्टं विवेचनम् "हेतुमति च"[२] "पक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चा-शत्षष्टिसप्तत्यशीतिनवतिशतम्"[३] "तदस्याऽस्त्यस्मिन्निति मतुप्"[४] "इत्यादीनां पाणिनीयसूत्राणां भाष्ये भगवता पतञ्जलिना तथा प्रदीपे कैयटेन सविस्तरं प्रतिपादितं हेतुमति च"[५] सूत्रे भाष्ये यथा "इह कथं वर्तमानता कंस घातयति वलिं बन्धयति इति चिरहते च कंसे चिरबद्धे च बलौ? अत्रापि युक्ता। कथम्? ये तावदत्र शौभिका नाम एते प्रत्यक्षं कंसं घातयन्ति, पत्यक्षं च बलिं बन्धयन्तीति। चित्रेषु कथम्? चित्रेष्वपि ऊद्गूर्णनिपतिताश्च प्रहारा दृश्यन्ते कंसस्य कृष्णस्य च। ग्रन्थिकेषु कथम्? यत्र

---

१. व्याकरण म. १.३ आ. १ क. १

२. पा. सू. ३–१–२६

३. पा. सू. ५।१।५६

४. पा. सू. ५।२।८४

५. पा. सू. ३।१।२६

शब्दग्रन्थनमात्रं लक्ष्यते? तेऽपि हि तेषामुत्पत्तिप्रभृत्या विनाशात् तद् वृद्धीव्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति।"[१]

अस्यार्थः कंसं वधमाचष्टे इति विग्रहे कंसं घातयति इत्यत्र, बलिबन्धनमाचष्टे इति विग्रहे बलिं बन्धयति इत्यत्र च वर्तमानकालता कथं भवति? न च पूर्वकाल एव हते कंसे पूर्वकाले एव बद्धे बलौ च कंसं घातयति "बलिं बन्धयति" इत्यत्र वर्तमानकालत्वासंगतिरिति वाच्यम्, नाटकेषु शौभिकैः नाटके कंसकृष्णादि भूमिकायाम् अभिनयकुर्वद्भिः नटैः प्रत्यक्षमेव कंसवधबलिबन्धनादिदर्शनेन चित्रेष्वपि कंसस्य चोदगूर्णनिपतितप्रहारदर्शनेन च तत्र वर्तमानकालत्वप्रतीतेः।

ननु ग्रन्थिषु कथं वर्तमानकालप्रयोगदर्शनम्, यत्र शब्दग्रन्थनमात्रं लक्ष्यते इति चेदुच्यते। अर्थात् ग्रन्थकर्तृभिः तेषामुत्पत्तिः मृत्युं यावत् तद्बृद्धीव्याचक्षाणै स्वबुद्धिषु वर्तमानानां कंसकृष्णादीनां प्रकाशनात्तत्र वर्तमानकालत्वप्रतीतेः। अत्र "सतो बुद्धिविषयान् प्रकाशयन्ती"ति वचनेन बौद्धार्थस्वीकारे भगवतः भाष्यकारस्याचार्यपतञ्जलेः स्पष्टमतः परिलक्षते। विशेषतः "बुद्धिविषयान्" इत्यत्र सतः इत्यस्य विशेषणत्वेन प्रयुक्तत्वात् पतञ्जलेराचार्यस्य मतेऽपि बौद्धार्थः स्वीक्रियते एवेति नास्ति मनागपि संशयलेशः।

एवम् "पक्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्"[२] इत्यादि पाणिनीये सूत्रे महाभाष्ये "अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु" इति वार्तिकस्य व्याख्यानावसरे महाभाष्ये उक्तमस्ति–

"ननु चोक्तम्– विंशत्यादयो दशदर्थे चेत्– समासवचनानुपपत्तिः, परिमाणिनि चेत् पुनः स्वार्थे प्रत्ययविधानम्, षष्ठीवचनविधिश्चेति।

नैष दोषः। समुदाये विंशत्यादयो भविष्यन्ति। किं वक्तव्यमेतत्? नहि। कथमनुच्यमानं गंस्यते? सङ्घ इति वर्तते, सङ्घः समूहः समुदाय इत्यर्थान्तरम्।"[३]

अस्य "संघः" "समूहः" इति वाक्यांशं व्याख्याता प्रदीपे कैयटेनोक्तम्– "द्रव्यसंघयोर्दशतोः संघे प्रत्ययो निपात्यते, न तु द्रव्यसंघे। इह द्रव्याणां द्रव्यसंघस्य दशतां दशत्संघस्य च पारमार्थिको भेदो नास्ति। केवलं बृद्ध्या परिकल्प्यते। बुद्धिव्यवस्थापिताऽर्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थाकारामुप-जनयन्तोऽसत्यपि वास्तवे भेदे तमवगमयन्तीति।।"[४] कैयटे। अर्थात् बुद्धौ व्यवस्थापिताः अर्थनिबन्धनाश्च शब्दाः बुद्धिमेवार्थाकारकारितां कृत्वाऽसत्यपि वास्तवे भेदे तं भेदमवबोधयन्तीति कैयटोक्तेः तेषाम्मतेऽपि बौद्धशब्दबौद्धार्थयोः सत्ता अस्त्येव।

---

१. पातञ्जले महाभाष्ये ३.६. आ. २. सू. २६
२. ५।१।५६
३. ५ अ. १ पा. २ आ.
४. ५. अ. १ पा. २ आ.

तथा च "तदस्यास्त्यस्मिन्निति मतुप्"[१] सूत्रे महाभाष्ये भगवता आचार्येण पतञ्जलिना बौद्धार्थः दृढतरेण प्रस्तुतः यथा– "अथास्तिग्रहणं किमर्थम्? सत्तायामर्थे प्रत्ययो यथा स्यात्" नैतदस्ति प्रयोजनम्। न सत्तां पदार्थो व्यभिचरिष्यति। इदं तर्हि प्रयोजनम्– सम्प्रति सत्तायां यथा स्यात्, भूतभविष्यत्वसत्तायां मा भूत्। "गावोऽस्यासन्" "गावोऽस्य भवितातः इति।" अत्रेदं तत्त्वम्– ननु "तदस्यास्त्यस्मिन्निति मतुप्"[२] सूत्रे अस्तिग्रहणं व्यर्थम्, यतोहि संभवे व्यभिचारे च विशेषणविशेष्यभावो भवति, यथा निलोत्पलमिति। सत्तां तु पदार्थो न व्यभिचरिष्यति, तामन्तरेण पदोच्चारणासंभवात् तस्या एव सर्वशब्दप्रवृत्तौ कारणत्वात्। अत एव अग्नेरुणत्वव्यभिचारादर्शनात् अग्नेरुणविशेषणत्वस्यासम्भवापत्तिः। तेन–

**सम्भवव्यभिचाराभ्यां स्याद् वेशेषणमर्थवत्।**
**न शीतेन च चोष्णेन वह्निः क्वापि विशेष्यते।।**

इति अभियुक्तोक्तिः संगच्छते। प्रकृतसूत्रेऽपि सत्तायाम्प्रत्ययविधानाय "अस्ति" इति विशेषणपदस्य ग्रहणस्वीकारे व्यभिचाराभावात्। पदार्थे सत्ताया व्यभिचारितत्वाभावात् सत्ताया एव प्रातिपादिकार्थत्वे सत्तायाः विशेषणत्वाभावादिति चेत्? न सत्तायां यथा स्यात्। सत्तायां वर्तमानात् सत्तोपाधिकार्थवाचिनः शब्दादेव प्रत्ययः स्यादित्येवमर्थं "अस्ति" ग्रहणस्य सार्थकत्वात् "न सत्तां पदार्थो व्यभिचरति" इति भाष्यांशं विवेचयतोक्तं प्रदीपे कैयटेन– "यावद् बुद्ध्या पदार्थो न विषयीकृतस्तावत् पदस्य प्रयोगाभावः। तस्मात् बुद्धिसत्तासमाविष्टोऽर्थो विधिनिषेधजननादिभिः सम्बन्ध्यते वृक्षोऽस्ति, वृक्षो नास्ति, वृक्षो जायत इति। अत्यन्तासतोऽपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणदिप्रयोगः, तस्मात् बुद्ध्यारूढोपचरिता सत्ता शब्दप्रयोगाश्रयत्वादव्यभिचारेत्यर्थः। सैव तु बुद्धिसत्ता प्रयोक्तृप्रतिपतृणां बहिरूपतयाऽवभाषते। यदि नास्तीत्यस्य सत्ताविरोधात्प्रयोगाप्रसङ्गः। अंकुरो जायते इति च प्रयोगो न स्यात् सतो जन्मविरोधात्। उपचारसत्तायां त्वेते दोषाः नावतरन्ति, बुद्धिसत्तासमाविष्टस्य वहिः सत्त्वासत्त्वजननप्रतिपादनायास्ति नास्ति जायते इति प्रयोगयोगात्।" अत्र शब्दप्रयोगाश्रयत्वमित्यनेन शब्दजबोधविषयत्वं लक्ष्यते। बौद्धार्थः प्रयोक्तुप्रतिपतृणां बहिरूपतयाऽवभाषते इति कृत्या बहिः सत्तासत्वे तु तत्समानाधिकरणतया, असत्त्वे तु केवलायास्तस्या एव बहिरूपत्वेन भानम्, अत एव घटशून्यादपि गेहाद् घटमानयेत्युक्ते आनयने बौद्धार्थस्वीकारे श्रोता प्रवर्तते, पश्चात्तदभावनिर्णये सः वक्तृज्ञानस्य भ्रमत्वं द्रढीयान् विश्वासो आसीत्। कैयटस्येदं तात्पर्यं यत् यावन्त पदार्थस्य बुद्धिविषयत्वम्, न तावत् पदप्रयोगासम्भवः बुद्धिसत्तासमाविष्टस्य कल्पयति। अनेन ज्ञायते भाष्यकारस्य कैयटस्य च बौद्धार्थे बौद्धार्थस्यैव विधिनिषेधजननादिभिः सम्बद्धत्वात्। बाह्यसत्ताया अत्यन्ताभावस्थितौ शशशृङ्गादीन् बुद्धावारूढा आरोपिता च सत्तैव शब्दप्रयोगाश्रय इति न कोऽपि दोषः। सैव बुद्धिसत्ता प्रयोक्तृप्रतिपतृणां

---

१. पा. सू. ५।२।६४
२. पा. सू. ५।२।६४

बाह्यरूपेण भाषते। अत्रेदं तत्त्वम् बाह्यसत्तास्थितौ बाह्यसत्तायाः समानाधीकरणतया बौद्धार्थो भाषते। अत एव घटाभावयति ग्रहेऽपि "घटमानयेति" वाक्ये च घटानयनप्रवृत्तिर्दृश्यते, ततो घटाभावनिश्चये सति वक्तायाः ज्ञानस्याऽयथार्थत्वं स्वीक्रियते। तदाऽन्तकरणस्य रागादिदोषदूषितत्वात् सा बौद्धसत्तैव यथार्थवत् भाषते।

ननु सत्तायाः प्रयोगनियामकत्वस्वीकारे "वृक्षो नाऽस्ति" इति प्रयोगानापत्ति वृक्षः इत्यनेनैव सत्तार्थबोधे उक्तार्थानामप्रयोगः" इति न्यायेन "वृक्षोऽस्ति" इति प्रयोगानापत्तिः। "वृक्षो नास्ति" इत्यत्रापि "नास्ति" क्रियायाः अप्रयोगः सत्ताविरोधात्, अंकुरो जायते इत्यत्र जन्धातोः अप्रयोगः सतो जन्मासम्भवात् इति चेन्न। बौद्धार्थस्य ग्रहणेन सर्वदोषपरिहतः।

नैयायिकाः अपि बौद्धार्थमङ्गीकुर्वन्ति। तदुक्तम् न्यायदर्शने गौतमाचार्येण न्यायसूत्र[१] – "नासन्तसन्नसदसत सदसतोर्वैधर्म्यात्। अर्थात् उत्पत्तेः पूर्वं कार्यमसन्नास्ति, असत उत्पत्तौ शशविषाणादेरप्युत्पत्तिः स्यात्, स्याच्च सिकताषु तैलम्। उत्पत्तेः पूर्वं कार्यं न सदपि सम्भवति सत उत्पत्त्यसम्भवात्, सत उत्पत्तिस्वीकारे पुनः पुनरुत्पत्तेरनवस्थादोषापत्तेः। नापि सदसत् सम्भवति सदसतोवैधर्म्यात् समानाधिकरणाभावात्।

नैष दोषः, "उत्पादव्ययदर्शनात्" न्यायसूत्र[१] इति गौतमोक्तेः। अर्थात् उत्पत्तेः प्राक् कार्यं सदसत् उत्पत्तिविनाशप्रत्यक्षत्वात्, सतः स्वीकारे उत्पत्त्यभावापत्तेः। असतस्वीकारे विनाशाभावापत्तेश्च न चैवं स्वीकारे शशविषाणाद्युत्पत्तिरिति वाच्यम्– "बुद्धिसिद्धन्तु तदसत्" इति गौतमोक्तेः। अर्थात् प्रागुत्पत्तेः तत् कार्यं सत्, परन्तु बुद्धिविषयत्वादसदिति न कोऽपि दोषः। सांख्याः अपि बौद्धार्थवादवीजं स्वीकुवता सत्कार्यवादं स्वीकुर्वन्ति। एतै प्रमाणैः वैयाकरणानां मते बौद्धार्थस्य स्वीकारेण मधुशब्दोच्चारणे मुखे माधुयरसास्वादापत्तिः वह्निशब्दोच्चारणे मुखे न दाहापत्तिः भवति। अतः वैयाकरणानां नये बौद्ध एवार्थः शक्यः, पदञ्च स्फोटात्मकमेव।

---

१. ४ आ. १ सूत्र.-४८

२. ४ आ. १ सू. ४६

# चूडाकरणे शिखास्थापनविमर्शः

डॉ॰ रामानुज उपाध्यायः

भारतीया संस्कृतिः वेदमूलासती मनुष्याणां जीवनोत्कर्षाय तत्पूर्णतायै च अपूर्वोपायरूपैः विविधैर्यागसंस्कारकर्मभिः तेषु गुणातिशयमापादयन्ती विराजतेतराम्। तत्र अनादिकालप्रवर्तितायामस्यां संस्कृतौ शिखास्थापनविधानमपि सर्वेषां पारम्परिकाऽनुशिष्टानां जनानां कृते वासन्तिकं मङ्गलाभिधञ्च मानं सातिशयमाधत्ते इति विज्ञायते। तत्र च एतस्य शिखाधारणस्य महत्त्वं न केवलं कर्तव्यतया विहिते चूडोपनयनादि संस्कारे श्रौतस्मार्तादिक्रियाव्यापारे चैवाभिधीयते, अपितु जीवनस्य दिव्योत्कर्षरूपेषु आधिभौतिक-आधिदैविक-आध्यात्मिकभावापन्नेषु सर्वेष्वपि सोपानेषु यथाक्रममारोहणाय सर्वसाधारणमनुष्याणां कृतेऽपि वैविध्येनास्य प्राशस्त्यमभिगीयते। एतद्विषयकं विवरणजातं संहिता-ब्राह्मणोपनिषत्सूत्रादिग्रन्थेषु एवं निदर्श्यते।

**शिखापदव्युत्पत्तिः-**

तत्र शिखा इति शब्दः चूडा, चूड, चोल, इत्यादिशब्दैः शास्त्रेषु परिभाष्यते। तत्राऽपि शिखाशब्दः स्वप्नार्थक शीङ्धातोः "ख" प्रत्यये कृते, चूडाशब्दः चुङ् धातोरङिदीर्घत्वे च कृते तथा चोल शब्दः चुलधातोरचि घे वा कृते[1] निष्पद्यते।

उपर्युक्तव्युत्पत्तिदिशा कुमाराणां शिरसि यथाविधि वपनपूर्वकं केशशेषस्य शायनं (नियमेन स्थापनं) समुच्छ्रायो वा शिखास्थापन-चूडाकरण-चौलसंस्कार इति कर्मविशेषनामभिः गृह्यसूत्रादिषु प्रवर्तते।[2] एष संस्कारः सांवत्सरिकस्य तृतीयसंवत्सराप्रतिहतस्य यथाकुलाचारं प्राप्तायुषः कुमारस्य वा क्रियते।[3]

**शिखास्थापनपक्षाः-**

अस्मिन् संस्कारकर्मणि केशशेषस्य स्थापनविषयके चूडाकरणेऽपि नैकविधपक्षा यथा गोत्रादि-कुलाचारं विधीयन्ते यथा- दक्षिणतः कम्बुजानां, वसिष्ठानामुभयतः, अत्रिकश्यपानां मुण्डा भृगवः

१. पाणिनीय अष्टाध्यायी- ३/३/१०४ (षिद्भिदादिभ्योडङ्)
२. पा. गृ. सू.- २-१
३. पा. गृ. सू.- सांवत्सरिकस्य चूडाकरणम्-तृतीयेवाऽप्रतिहते-२/१/२

पञ्चचूडा अंगिरसः वाजसनेयिनामेकां मंगलार्थं शिखिनोऽन्ये इति।[१]

एवमेव,

**केश शेषं ततः कुर्याद्यस्मिन्गोत्रे यथोचितम्।**
**वसिष्ठः दक्षिणे भागे उभयत्रापि कश्यपाः।।**
**शिखां कुर्वन्त्यङ्गिरसः शिखाभिः पञ्चभिर्युताम्।**
**परितः केशपङ्क्तया वा मुण्डाश्च भृगवोमताः।।**[२]

अर्थात् यथैवेषां कुलधर्मः गोत्रप्रवरादिभेदरूपः तथैव तेषां कुमाराणां क्रमेण विशिख, एकशिख द्विशिख त्रिशिख, पञ्चशिख रूपेण केशशेषकरणं विधेयमिति। विवेचनास्यास्य उपोद्बलकानि कानिचन वाक्यानि एवं निदर्श्यन्ते– "अथ चौलसंस्कारे एनमेकशिखः त्रिशिखः पंञ्चशिखो वा यथैवेषां कुलधर्मः स्यात् यथर्षिशिखां निदधातीत्येके।"[३]

एवं भगवान् पारस्करः, अन्येऽपि च सूत्रकाराः शिखानिधानमेव विदधति, तत्तत्कुलधर्मानुसारेण। अत्र कुलधर्मानुसारेणेति पदे एवं न सन्देहः करणीयः यत् येषां कुले सर्वमुण्डनाचारोऽस्ति तैः स्वकुलाचारानुसारेण सर्वमुण्डनमेव कर्तव्यं, यतोहि, कुलाचारशब्दस्य अर्थं ते भाष्यकाराः अग्रे एवं विवृण्वन्ति– दक्षिणतः कम्बुजवसिष्ठानामित्यादि[४] रूपेण। अनेनेदं प्रतीयते भृगुगोत्राणामेव सर्वमुण्डनं न तु अन्येषाम्। अस्माकं वाजसनेयिनामेका इत्यनेन एकशिखानिधानमेव विहितम्। अतश्च यथाकुलाचारमित्यस्य शिखानिधानमेवास्माकं पूर्वाचार्याणां हरिहर, गदाधरप्रभृतीनामभेद्यः सिद्धान्तो न तु सर्ववपनम्। तथा चोक्तम्–

**सदोपवीतिना भाव्यं सदाबद्धशिखेन च।**
**विशिखो व्युपवीतश्च, यत्करोति न तत्कृतम्।।**[५]

एवमिदं शिखाकर्म न केवलं स्मार्तं किन्तु श्रुतिप्रतिपाद्यमपि– "केशा न शीर्षन्यशसे श्रियै शिखा"[६] अपि च

"यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव"[७] अस्मिन् मन्त्रव्याख्याने उव्वटाचार्यः सायणो महीधरश्च विशिखेति पदस्यार्थं विगतशिखाः मुण्डिताः शिखारहिता; मुण्डितमुण्डाः कुमारा इति

१. पा. गृ. सू.– २-१-२१
२. पा. गृ. सू.– २/१/२१ (गदाधरभाष्यम्)
३. बौ. गृ. सू.– २/४/१७
४. पा. गृ. सू. २/१/२१ (हरिहरभाष्यम्)
५. छन्दोगपरिशिष्ट– पृ० ४५
६. यजु. सं. १८/९२
७. यजु. सं. १७/४८

कुर्वन्ति– अर्थात् युद्धस्थले बाणाः तथैव इतस्ततः पतन्ति यथा शिखारहिताः कुमाराः चाञ्चल्यादि तस्ततः परिभ्रमन्ति।

परञ्च विशिखा इति पदं नात्र मुण्डितमुण्डार्थः अपितु विविध–शिखिवत्वार्थपरमित्यङ्गीकृत्य न्यायसुधा[१] मीमांसाकौस्तुभकाराद्याचार्याः दार्ढ्येन मन्वते। यदि विशिखपदस्य मुण्डितशिरस्कत्वमर्थोऽभिप्रेतः स्यात् तदा वाजयुक्तैः बाणै सह मुण्डितशिरस्कानां कुमाराणां कथं सादृश्यमुपपन्नं भवेत् इति तेषामाचार्याणां मतिः। वस्तुतस्तु विशिखेति पदंमुभयार्थकम्। विशिखा, विविधशिखा, विकीर्णशिखा वा।

साम्प्रतं केचन वाजसनेयिनामस्माकं चौल कर्मणि सर्ववपनं कुर्वन्ति, कारयन्ति च तद्दृष्ट्वा केचिदिममशिष्टाचारं पद्धत्यादावपि आरोपयन्ति, तां प्रमाणं मन्यमाना अनुष्ठापयन्ति, चैतत्सर्वं सूत्रकारविरुद्धं, हरिहरगदाधरप्रभृतिभाष्यपद्धत्यादिअनुष्ठितप्राचीनाचार विरुद्धमेव। लौगाक्षिवचने भृगूणां सर्वमुण्डनं विधानात् छन्दोगानां च स्वगृह्ये विधानाच्च तेषामुभयेषामेव चौले सशिखं सर्ववपनम्। इतरेषां सर्वेषामपि शिखानिधानमेवेतिनिश्चप्रचम्। ये नाम स्वकुलानुरोधेन कुलदेवतायै केशदानं प्रतिजानते कुर्वन्ति च तैरपि चूडाकरणात्पूर्वमेव तत्कर्तव्यं न ततः परम्। चूणाकरणे शिखा अवश्यं रक्षणीया। एवं शिखां निधाय तद्युता यावज्जीवं स्वस्ववर्णोक्तानि कर्माणि अनुतिष्ठन्तः तज्जनितं समग्रंफलं सर्वश्रेयोरूपं प्राप्नुयुर्धार्मिका जनाः। कन्यायाश्चौलकर्मणि सर्वं तूष्णीं मन्त्रवर्जं भवति। तथाचोक्तम्–हुतकृत्यं तु पुंवत् स्यात् स्त्रीणां चूडाकृतावपि[२] इति वचनात् होमः समन्त्रको भवति। केवलं प्रधानकृत्यममन्त्रकं–भवति। अन्यत्सर्वमङ्गकृत्यं गणपतिपूजादिनान्दीश्राद्धान्तं समन्त्रकमेव।

---

१. न्याय सुधा–पृ० ९७

२. पा. गृ. सू. २/१/२४

# धर्मस्य व्यावहारिकं स्वरूपम्

डॉ॰ यशवीरः

वेदाः, ब्राह्मणग्रन्थाः, उपनिषदश्च श्रुतिशब्देन व्यवह्रियन्ते। अस्येदं कारणं यत् तेषां सर्वमपि शैक्षिकं वृत्तं श्रवणोपर्येव तिष्ठति। यदा च श्रुति स्मृतीति उभौ शब्दौ व्यवह्रितौ भवतस्तदा साधारणतया व्यवहारे श्रुतिशब्दात् वेदानां, ब्राह्मणानां, उपनिषदाञ्च बोधो भवति स्मृतिशब्दाच्च षड् वेदाङ्गानां - शिक्षा, कल्प, निरुक्त, व्याकरण, छन्दः ज्योतिषादीनां, धर्मशास्त्राणां, इतिहासपुराणानां, नीतिग्रन्थानां च बोधो भवति। किन्तु स्मृतिशब्दस्य विशिष्टे अर्थे केवलं धर्मशास्त्रस्य त एव ग्रन्थाः बोध्यन्ते येषु प्रजायाः कृते समुचिताहारविहाराणां व्यवहारकर्मणां, समाजस्य शासनव्यवस्थानां, नीतीनां, सदाचाराणां चोपदेशाः प्राप्यन्ते। येषु ग्रन्थेषु एतत्सर्वं स्पष्टतया प्रतिनिधिरूपेण व्यक्तं भवति। एव धर्मशास्त्राणि व्यपदिश्यन्ते। धर्मस्य व्यावहारिकं स्वरूपं ज्ञातुं तेषामेवाश्रयोऽस्माभिः गृह्यते।

स्मृतीनां संख्या प्रधानतः पुराणानामिव अष्टादशत्वं भजते तथापि यथा पुराणानां समूहे, उपपुराणानि, औपपुराणानि च भवन्ति येन तेषां संख्या अष्टाविंशति, षड्पञ्चाशत् वा कथ्यते तद्वदेव स्मृतीनामपि संख्या अष्टाविंशति षड्पञ्चाशत् वा परिगण्यते। ये सन्ति प्रमुखाः स्मृतिकारास्ते क्रमश उल्लिख्यन्ते- मनुः, याज्ञवल्क्यः, अत्रिः, विष्णुः हारीतः उशनस्, अङ्गिरा, यमः, कात्यायनः, बृहस्पतिः, पाराशरः, व्यासः, दक्ष, गौतमः, वशिष्ठः, नारदः, भृगुः, शंखः, बौधायन, आपस्तम्बश्च।[१]

सर्वास्वपि स्मृतिषु मानवधर्मशास्त्रं प्रामुख्यं भजते। मनोः स्मृतिः मानवजाते। आदि प्रजापतेः स्वायम्भुवस्य मनोः रचना विद्यते। निघण्टौ मनुशब्दस्य पाठः द्युस्थानीयेषु देवेषु कृतोऽस्ति। वाजसनेयि-संहितायां मनो उल्लेखः प्रजापतिरूपेण विद्यते। शतपथब्राह्मणे अयमेव मनुः मत्स्यावतारस्य कथा-प्रसंगे स्मृतः। ऐतरेयब्राह्मणेऽपि लिखितमस्ति यन्मनुना स्वपुत्रेषु सम्पदां विभाजनं धर्मेण कृतमासीत्।

केन विधिना तेनादिमनुना सम्पत्तेर्दायभागः विभक्तः तथा च स स्वकनिष्ठपुत्राय नाभानेदिष्टाय दायभागं नादात्। प्राचीनेषु ग्रन्थेषु यत्र यत्र मानवधर्मशास्त्रस्योद्धरणानि प्राप्यन्ते तानि प्रादशः सूत्ररूपेणावतिष्ठन्ते। तानि संप्रति समुपलब्धायां मनुस्मृत्यां तथैव नोपलभ्यन्ते। अतः इदं कल्पनं

१. हिन्दुत्वः रामदासगौड़ पृष्ठ ४४९

सुशकं यदादि मानवशास्त्रं पूर्वमासीत्। साम्प्रतिकी मनुस्मृतिस्तु भृगु-मनुसंवादरूपेण या विद्यते सा तेषामेव पूर्ववर्तिनां मानवधर्मशास्त्राणां आधारेण विनिर्मिता।

धर्मस्य व्यावहारिकं रूपं परिज्ञातुं स्मृतीनां परमावश्यकता विद्यते। अत्र शोधलेखे योऽयं प्रयासः यदा कृतः तत्कृते निवेदनमिदं यत् स्मृतीर्विहाय मानवसमाजाय कल्याणमार्गोपदेशः कथमपि च सम्भाव्यते। समाजशास्त्रं, नीतिशास्त्रं, धर्मशास्त्रं, प्रायशोऽर्थशास्त्रं च स्मृतिषु समाविष्टं भवति। अत एव तत्तत्कालेषु समाजस्य विकासपरम्परायां स्मृतीनां कालवरेष्वपि परिवर्तनं सञ्जातमिति सहजं समाधानम्। किन्तु एतदृशानां परिवर्तननानां समीक्षणं तदैव कर्तुं पारयामो यदा तत्तत् स्मृतीनां विस्तृतं समीक्षात्मकमनुशीलनं स्यात्। महाभारतं विश्वस्य विशालतमो ग्रन्थः।

**वेदव्यासेन स्वयः लिखितमस्ति विषयेऽस्मिन्–**

> **धर्मे चार्थे च कामे च मोक्षे च पुरुषर्षभ।**
> **यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्।।**[1]

तस्मिन्नेव महाभारते धर्मार्थकाममोक्षाणामुपदेशात्प्राक् किमपि विलक्षणं धर्मशास्त्रमुपदिष्टम्।

महाभारतं समेषामस्माकं प्रमुखो ग्रन्थः। तत्र स्वर्गारोहणपर्वणि भारतसावित्रीति नाम्ना श्लोकचतुष्टयी भगवता वेदव्यासेन विरचिता यत्र धर्मस्य स्वरूपं सुन्दरतया वर्णितम्। स ब्रवीति–

> **मातापितृसहस्राणि पुत्रदाराशतानि न।**
> **संसारेष्वनुभूतानि यानि यास्यन्ति चापरे।।**
>
> **हर्षस्थानसहस्राणि भयस्थानशतानि च।**
> **दिवसे दिवसे मूढमाविशन्ति न पण्डितम्।।**
>
> **ऊर्ध्वबाहुर्विरम्येष नहि कश्चिच्छ्रृणोति मे।**
> **धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते?।।**
>
> **न जातुकामान्न भयान्न दोषात् धर्मं त्यजेज्जीवितस्यापि हेतोः।**
> **जीवो नित्यः सुखदुःखे त्वनित्ये धर्मो नित्यः हेतुरस्य त्वनित्यः।।**[2]

धर्मस्येदं महत्त्वं वेदव्यासेन तदा रचितं यदा महाभारतस्य महान् युद्धः परिसमाप्तः। यदि धर्मस्य रक्षणं जनैस्तदानीं कृतं स्यात् तदा तादृशः महान् युद्धः कदापि नाभवत् धर्म एव जीवनस्य संसारस्य चाधारभूमिः। स च धर्मः द्विधा शाश्वतः परिवर्तनशीलश्च। तत्र शाश्वतधर्मविषये वदति भगवान् मनुः–

---

१. म.भा. अ. ४

२. म. भा. स्वर्गा. ४.३/६०, ६१, ६२, ६३

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।**[१]

धृतिः, क्षमाः, दमः, अस्तेयं, शौचं, इन्द्रियनिग्रहः, धीः, विद्या, सत्यं, अक्रोधश्च इति दशधा शाश्वतो धर्मः। शाश्वतेन धर्मेण किं किं न भवति? तेन तु सर्वं प्राप्यते–

**धर्मादर्थं प्रभवति धर्मात्प्रभवते सुखम्।**
**धर्मेण लभते सर्वं धर्मसारमिदं जगत्।।**[२]

धर्मेण सर्वं लभते, इदं जगत् धर्मसारमिति वाल्मीकेः वचनम्। एतादृशं धर्मं विहाय केवलं विनाशस्यैव व्यवस्था स्यात्–

**जीवन्तं मृतवन्मन्ये देहिनं धर्ममार्जितम्।**
**यतो धर्मेण संयुक्तो दीर्घजीवी न संशयः।।**

दीर्घजीविता मानवतायाः आकांक्षितमस्ति। शाश्वतधर्माणां पालनं सर्वदा करणीयम्। परिवर्तनशीले धर्मस्वरूपे पुनः स्मृतीनां प्रामाण्यं युगानुसारिमन्तकम्। यतो हि कथितमभियुक्तैः–

**श्रुतिर्विभिन्नाः स्मृतयोर्विभिन्नाः नैको मुनिर्यस्य वचः प्रमाणम्।**
**धर्मस्य तत्त्वं निहितं गुहायां ..........................................।।**

समयचक्रं सर्वदा प्रचलत्येव तदा तत्र तत्र कालेषु तत्तद ऋषिभिः परिशोधितः परिष्कृतः परिवर्तितः परिवर्द्धितश्च धर्मः सेवनीयः। तत्र यद्यपि शुद्धं लोकविरुद्धं नाचरणीयं ना करणीयमित्यपि पालनीयं भवति।

परिवर्तनशीले धर्मे सर्वप्रथमः संविधानसमर्थितो धर्मः। संवैधानिको धर्मः सर्वत्र देशेषु प्रचलति। तस्य मुख्यः गणपतिः गणानां पति राजा। राजा च प्रजया संसृष्टः राजा अष्टलोकपालानां शक्तिपुंजः इति शास्त्रेषूक्तम्–

**गणानां त्वा गणपतिंॐहवामहे कविकवीनामुपश्रवस्तमम्।**
**ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्थत आ नः शृण्वन्नतिभिः सीदसादनम्।।**[३]

अस्यार्थः हे गणपते! हे समूहेषु श्रेष्ठः, हे राजन्! त्वमेव गणेषु श्रेष्ठः ज्येष्ठः कविषु कविः

---

१. मनुस्मृतिः ६/९२
२. वा. रामा. अरण्य ९/३०
३. ऋग्वेद २/२३

ज्ञानिषु ज्ञानी, उत्कृष्टेषूत्कृटः त्वमेव शिवस्य ज्येष्ठः कृपापात्रः त्वामतः आवाहये इहागच्छ इह तिष्ठ इति।

यो वै गणपतिं राजानं दूर्वयार्चतिस वै श्रवणोपमो भवति-यो दूर्वाङ्कुरैर्यजति स वै श्रवणोपमो भवति।[१]

दूर्वा इत्युपलाक्षणिकप्रयोगः। दूर्वा विनम्रतावाचकः शब्दः। प्रतीकभूतां दूर्वा। यदि दूर्वया राजानमभिपूजयति जनस्तदावश्यमेव स धनवान् भवति कुबेरवत्। यः खलु मृत्युं जेतुमिच्छति स धर्मं चरति। जीवनं परमात्मयाः कृपा। तां कृपामधिगन्तुं महामृत्युञ्जयं मन्त्रं वेदेषु निर्दिष्टम्–

**ऊँ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।**
**ऊर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्।।**[२]

यजुर्वेदेऽप्ययं मंत्र कथितः। तस्य स्वरूपमित्थम्–

**ऊँ हौं जूं सः ऊँ भू र्भुवः स्वः ऊँ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।**
**ऊर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात् ऊँ भूः भुवः स्वः जूं हौं ऊँ।।**[३]

मृत्युविजयस्याकांक्षा कस्मिन्युगे नासीत् नवाभविष्यत्?

**मृत्योर्मा अमृतं गमय**
**तमसो मा ज्योतिर्गमय**

अद्यापि सर्वस्मिन्नपि विश्वे मृत्योर्विभीषकां जेतुं विज्ञानेन कियन्तः प्रयत्नाः क्रियन्ते। एतत्सर्वं केवलं धर्मेण एव लभ्यं भवतीति सत्यमेव

**धर्मेण धार्यते लोकः[४] यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः[५]**
**सुगां ऋतस्य पन्था[६] धर्मनित्यास्तु मेके चिन्मते सीदन्ति कर्हिचित्[७]**

इत्यादिवचनैः ज्ञातव्यः। आचरिते सति सत्यधर्मे सर्वं पारमार्थिकं पारलौकिकं लौकिकं च

१. गणपत्यथर्वशीर्षम्
२. ऋग्वेद १/५९/१२
३. यजु. ३/६९
४. चाणक्यसूत्र २३४
५. वैशे. सूत्र १/१/२
६. ऋग्वेद ८/३/१३
७. म. भा. वन. प. २६३/४४

सुखं सिद्धमेव भवतीति–

**धर्मो माता पिता चैव धर्मो बन्धुः सुहृद् तथा।**
**धर्मः स्वर्गस्य सोपानं धर्मात् स्वर्गमवाप्यते।।**

महाभारतस्य शान्तिपर्वण्युल्लेखः प्राप्यते य पूर्वस्मिन् काले सत्ययुगे बहुकालपर्यन्तं न कोऽपि राजासीत् न राज्यं, न दण्डं, न दण्डकृर्ता वा। सर्वाः प्रजा धर्मानुगामिनी आसीदेव एतादृशीं शान्तिं दशामवलोक्य जनाः शनैः शनैः औदासीन्यमभिपेदिरे। ततः तेषां व्यवहारे काम, क्रोध, लोभ, मद, मत्सर, राग, द्वेषादीनां दुर्गुणानां प्रभावो वृद्धिमुपगतः। पारस्परिकं क्लेशादिकं परिवृष्टम्। सर्वे ब्रह्माणं गत्वा प्रार्थयामासुः। तदा ब्रह्मा लक्षाध्यायविशालं दण्डनीतिनामकं नीतिशास्त्रं रचयामास। यत्र धर्मार्थकाममोक्षाणां विस्तरेण वर्णनमासीत्। धनानां रक्षणं, तपसां चयः, खलानां दण्डः, त्रिवर्गसाधनं, आत्मा, देश, काल, उपाय, प्रयोजन, सहाय - षड्वर्गसाधनं, कर्मकाण्डं ज्ञानकाण्डं कृषिः, वाणिज्यं, जीविका, विशालव्यहारादिकं सर्वमपि तस्मिन् दण्डनीतिग्रन्थे तेन वर्णितमासीत्। तदनन्तरं प्रजायाः बुद्धिबलमायुषञ्च क्षीणं विज्ञाय भगवान् शिवः तद्दण्डनीतिं दशसहस्राध्यायेषु संक्षिप्तीचकार। ततश्च इन्द्रं दशसहस्त्रध्याय परिमितं वैशालाक्षशास्त्रमिति नाम्ना पुनः पञ्चसहस्राध्यायेषु संक्षिप्तं चकार। तच्छास्त्रं बाहुदन्तकमिति नाम्ना प्रसिद्धमासीत्। तदेव बार्हस्पत्यं शास्त्रमिति कथ्यते। पुनः शुक्राचार्यः एकसहस्राध्यायेषु तस्य संक्षेपणं विहितवान् तदेव औशनसीनीतिः। साम्प्रतिकी शुक्रनीतिः तस्यैव ग्रन्थस्य सारभूता।

यद्यपि महाभारतस्य इदं सर्वं वर्णनं विस्तरेण तत्रोपनिबद्धं सत् कथानकरूपेणात्मानं व्यनक्ति किन्तु तत्र या सूक्ष्मा विषय सूची प्रदर्शिता तस्या अध्ययनेन स्पष्टं प्रतिभाति यत् तदानीं भारतीये समाजे, संस्कृतौ, व्यवहारे च प्रशासनस्य तथा विद्यं नैपुण्यं, नीतिविषयकां सर्वोत्कृष्टा नियमाश्च संग्रहीता आसन् येन ज्ञातुं पार्यते यद् भारतीयः समाजः उत्कृष्टमरूपेण विकसित आसीत्।

भारतीयसंस्कृतेस्तु शासनं कस्मिंश्चित्समये व्यक्तिशः समाजदृष्ट्या च सुविस्तृतरूपेण दृढतया च, स्व गभीरया मेधया प्रतिभया च व्यवस्था स्थापनं करोति स्म। तथा च तेनानुशासनेन संयमेन च विश्वस्य कोऽपि देशः, कालः व्यक्तिर्वा नावशिष्टोऽभूत्। स्मृतीनां व्यावहारिकरूपेणेदं सर्वं स्पष्टं भवत्येव।

वस्तुतस्तु स्मृतिनां सर्वमपि सिद्धान्तजातं तत्त्वं वेदेभ्य एव प्रकटितमस्ति तद् बीजानि संहितासु, कल्पसूत्रेषु द्रष्टुं शक्यते। धर्मशास्त्रविहाय स्मृतीनामनुशासनं च परित्यज्य न कोऽपि देशः समाजो वा प्रगतिपथ आत्मानं सञ्चालयितुं क्षमते इति सत्यमेव।

अत एव समृतीनां प्रकाशे धर्मस्य व्यावहारिकं स्वरूपं दर्शनीयमिति दिक्।

# व्याकरणे प्रमाणविचारः

शिवप्रतापद्विवेदी

**प्रमाणमहत्त्वम्** -

कस्यापि विषयस्य सम्यग्ज्ञानं प्रमाणेन भवति। प्रमाणरहितं वाक्यं सर्वथा अश्रद्धेयं नैयायिकव्यवस्थायां वादिप्रतिवादिभ्यां पक्ष-प्रतिपक्षोपस्थापने साक्ष्यरूपेण प्रमाणं नितान्तमपेक्षितम्। प्रमाणरहितमुपस्थापितः स्वपक्षः न्यायालयेऽपि अस्वीकार्यः। अस्माकं शास्त्रे आचार्यैः प्रमाणस्य स्व-स्वशास्त्रानुसारं चर्चा विहिता। न्यायशास्त्रे **प्रमाकरणं**[1] **प्रमाणम्** अर्थात् प्रमायाः करणं प्रमाणं भवति। तत्र **साक्षात्कारि**[2] **यथार्थानुभवः प्रमा**।

तत्र दार्शनिकाः स्व-स्वमतानुसारं विवेचितं प्रमाणं विवृण्वते। आचार्यचारुवाकः[3] बृहस्पतिः प्रत्यक्षात्मकमेव प्रमाणमिति एकमेव प्रमाणं स्वीकरोति।

अन्ये च वैशेषिकाः काणादाः बौद्धाश्च '[4]**शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते,** अनुमानगतार्थत्वादिति प्रमाणद्वयं स्वीकुर्वन्ति। सांख्याचार्याः योगाचार्याश्च **'दृष्टमनुमानमाप्तवचनं'**[5] इति त्रिविधं प्रमाणं मन्यन्ते। नैयायिकाः **'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'**[6] इति चत्वारि प्रभाणानि स्वीमुर्वन्ति। गुरुपादविभूषिताः प्रभाकरमीमांसकाः 'तत्र **पञ्चविधमानम् इति गुरोर्मतम्**'[7] इति पञ्चप्रमाणानि स्वीकुर्वन्ति। वेदान्तिनः भाट्टाश्च **'अतः षडेव प्रमाणानि'**[8] इति षट् प्रमाणानि उररीकुर्वन्ति। पौराणिकाः ऐतिह्यं सम्भवं च षट्प्रमाणैः सह अष्टौ प्रमाणानि स्वीकुर्वन्ति। तान्त्रिकाः तद्भिन्नं चेष्टाख्येन अतिरिक्त[9]प्रमाणेन सह नव प्रमाणानि स्वीकुर्वन्ति।

---

1. तर्कभाषा प्र. नि. 13 पृ.
2. तर्कामृतम्, पृ.
3. न्याय म. पू. भा. पृ. 26
4. न्या. सि. मु. का. 140, 141
5. सां. त. कौ. का. 4
6. न्या. सू. 1/1/3
7. प्रकरण, प. पृ. 44
8. शारदा दीपिका
9. तात्पर्यटीका श्लो. 8, 11

व्याकरणशास्त्रं शब्दशास्त्रमस्ति। प्रमाणस्य विचारः दर्शनशास्त्रे क्रियते। व्याकरणशास्त्रे नागेशभट्ट-कैयट-भर्तृहरिप्रभृतयः महावैयाकरणाः दार्शनिका अपि आसन्। तस्मात् कारणात् परिष्कारग्रन्थेषु दर्शनवत् प्रमाणविवेचनं वयाकरणशास्त्रेऽपि प्राप्यते।

**व्याकरणदर्शने प्रमाणविचारः -**

'प्र' उपसर्गपूर्वक 'माङ्' मान इत्यस्मात् धातोः करणार्थे ल्युट्प्रत्यये कृते प्रमाणशब्दस्य सिद्धिर्भवति। तत्र प्रमाकरणं प्रमाणम्, प्रमीयते इति प्रमा, तत्करणं प्रमाणमिति। तत्र प्रत्यक्षानुमानोपमानशब्दानुपलब्धिप्रभृतीनि प्रमाणानि प्रतिपादितानि अन्यैः दार्शनिकचिन्तकैः, परमस्माकं वैयाकरणानां मते शब्द एव **प्रमाणानां मूर्द्धन्यः** यथा चोक्तं महाभाष्ये

**शब्द[1]प्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्।**

लोके तु प्रत्यक्षरूपप्रमाणस्यैव प्राधान्यं दृश्यते।

**व्याकरणे प्रमाणचर्चा -**

व्याकरणशास्त्रे प्रमाणादिचर्चाया अभावात् अस्य दर्शनत्वविषये शङ्का न कर्तुं शक्यते, शास्त्रेऽस्मिन्नपि प्रमाणचर्चायामुपलभ्यमानत्वात्। तथाहि व्याकरणे अनिर्ज्ञातार्थस्य साकल्येन ज्ञानमुच्यते प्रमा तथा च भाष्यम्, मानं हि तामनिर्ज्ञातार्थमुपादीयते अनिर्ज्ञातार्थं ज्ञास्यामीति। एतच्च मानसामान्य लक्षणम्- सर्ववेदपारिषदं हीदं शास्त्रम्।[2]

प्रमायाः करणं प्रमाणमिति। तैस्तैः शास्त्रकारैः उच्चावचानि प्रमाणानि उरर्यकारिषतः यत्र शब्दोऽन्यतमः। 'शब्दप्रमाणकाः वयं यच्छब्द आह तदस्माकं प्रमाणम्' इति भगवान् पतञ्चलिराचष्टे। प्रयोगार्हशब्दः प्रकृतिप्रत्ययात्मकस्सन् पदमित्यभिधीयते। तदर्थज्ञानमेव वाक्यार्थज्ञानस्य मूलायते। आकाङ्क्षायोग्यतासत्तियुक्तः पदोच्चय इति लक्षितं यद्वाक्यं तस्यैवार्थः पुरुषस्य प्रवृत्तौ वा निदानम्। शक्तिग्रहणेन विना प्रकृतिप्रत्ययात्मकस्य पदस्य अर्थधीर्नैवोपजायते। शक्तिग्राहकानां विविधानां मध्ये कोशव्याकरणयोः अनन्यादृशं प्राधान्यं परिस्फुरति।

**'प्रत्यक्षमनुमानं[3] च व्यतिक्रम्य व्यवस्थिताः'** इत्यारभ्य
**'तस्मादकृतकं शास्त्रं स्मृतिर्वा सनिबन्धनाम्।**
**आश्रित्यारभ्यते शिष्टैः शब्दानामनुशासनम्।।'[4]**

---

1. म. भा. प.
2. म. भा. 2/1/58
3. वा. प. 1/36
4. वा. प. 1/43

इत्यादि कारिकासु प्रत्यक्षतः आरभ्य शब्दानामनुशासनमिति अनुशासनपर्यन्तं प्रत्यक्ष-अनुमान-उपमान-शब्दार्थापत्त्यादीनां वर्णनमुपलभ्यते।

व्याकरणतन्त्रयोस्तु शब्दब्रह्मैव प्रधानं तत्त्वं समाश्रित्य तदुपयोगिपदार्थविभागसमुद्भासितानि निगमागममूलकानि बहूनि मतानि समधिगतयाथातथ्यैः शिष्टैः प्रणीतानि सन्ति। परं तन्त्रागमे **शक्तिशक्तिमतोर्मध्ये** शक्तेरेव प्राधान्यं व्यवस्थाप्य निखिलसाधनप्रक्रिया **निर्वाह्यते**। व्याकरणागमे तु **जन्मादिमयीभिः** शक्तिभिरुपचरितनानात्वमविधापरपर्यायां कालाख्यां स्वातन्त्र्यशक्तिं गौणीकृत्य प्राधान्येन शब्दब्रह्मविचारः कृतः।

वैयाकरणानां मतेऽन्तःकरणपरिणामविशेषस्यैव प्रमाणत्वात् प्रमाणमपि प्रमेयान्तः पातित्वेनैव **व्यवतिष्ठते**।

**व्याकरणमते प्रत्यक्षस्वरूपम् -**

व्याकरणदर्शनसम्मतेषु चतुर्षु प्रमाणेषु प्रत्यक्षप्रमाणस्य किं स्वरूपमिति जिज्ञासायाम् [1]इन्द्रियार्थसन्निकर्षजन्या या चित्तवृत्तिः, तत्प्रतिबिम्बितं चैतन्यं प्रत्यक्षप्रमा, तत्करणं प्रत्यक्षप्रमाणम् इति। यथा कूपादिजलं नालिकातो निर्गत्य केदारान् प्रविश्य तदाकारं भवति, तथैव **तैजसमन्तःकरणमपि** चक्षुरादिप्रणालिकया घटादिदेशं गत्वा घटादिविषयाकारं भवति। **तस्येयमेव** घटादिविषयाकारता वृत्तिरिति परिणाम इति वोच्यते। सा चेयं वृत्तिर्बाह्यविषयाभेदेन बौद्धस्यैवेति विशेषः। अस्यां वृत्तौ चैतन्यस्य प्रतिबिम्बनम्, अथवा एनां वृत्तिं द्वारीकृत्य घटादीनां साक्षिरूपे चेतने प्रतिबिम्बनं वृत्तिजन्यं[2] फलं प्रकटतारूपा प्रमा इत्युच्यते। तत्साधनीभूतावृत्तिः प्रमाणपदेनोच्यते।

**प्रत्यक्षस्य द्विविधस्वरूपम् -**

इदं प्रत्यक्षं निर्विकल्पकसविकल्पकभेदाभ्यां द्विविधम्। तत्र निर्विकल्पकं प्रकारत्वादिविषयता-नामनिरूपकं शब्देनाभिलापानर्हं भवति। अत एव निर्गातो विकल्पो यस्मात् तद् निर्विकल्पकमिति व्युत्पत्तिः सुष्ठु संगच्छते।

उक्तञ्च हरिणा-

**प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा।[3]**
**अत्रानुपाख्येयत्वं शब्दाभिलाषायोग्यत्वमेव॥**

---

1. वै. सि. ल. म. टी. द्व
2. म. भा. प्र. उ. 114
3. वा. प. 1/83

**अनुमानस्वरूपम् -**

अनुमीयतेऽनेनेति करणव्युत्पत्त्या अनुमितिकरणमनुमानमिति सामान्यं लक्षणम्। यद्यपि चार्वाकादिविचारकाः अनुमानस्य प्रामाण्यं न स्वीकुर्वन्ति, तथापि वैयाकरणै अनुमानप्रमाणं स्वीकृतम्। महाभाष्यकारपतञ्जलिना सरूपाणामिति सूत्रे तस्यैवोपद्बलकम्, तत्र प्रदीपः-उपोद्बलकमिति[1] - उद्गतं बलं, प्रत्यक्षं तत्पूर्वकत्वादनुमानस्य, उद्बलस्य समीपे अनुमानमित्यर्थ इति अनुमान-प्रमाणविषये सम्मतिर्दत्ता। 'चार्थे द्वन्द्वः' इत्यत्रापि एतदनुगुणं भाष्यमुपलभ्यते। तत्र कस्य प्रत्यक्षमपेक्ष्यते इति जिज्ञासायामुच्यते-'लिङ्गस्य व्याप्तिरूपसम्बन्धस्य च' इति। उक्तं च महाभाष्यकारेण धूमं[2] दृष्ट्वा वह्निरत्रेति गम्यते इति प्रत्यक्षस्तेनाग्निधूमयोरभिसम्बन्धः कृतो भवति त्रिविष्टब्धकपरिव्राजकयोश्च। स तद् विदेशस्थमपि दृष्ट्वा जानाति 'अग्निरत्रेति' 'परिव्राजकोऽत्रेति' इति च अस्मिन्[3] लक्षणे प्रत्यक्षपदं शाब्दज्ञानादेरप्युपलक्षणम्। अनुमितेर्मूले क्वचिदपि प्रत्यक्षं नियमेन पूर्वं भवतीत्येव लक्षणे प्रत्यक्षपदस्य तापर्यम्। यत्र क्वापि लिङ्गस्य शब्दज्ञानादिकम् तत्रापि लिङ्गस्य चाक्षुषादि तद्बोधकशब्दस्य श्रावणप्रत्यक्षं वा कदाचित् पूर्वं भवत्येव।

अनुमानभेदः-1. स्वार्थानुमानम्, 2. परार्थानुमानमिति।

**शब्दप्रमाणम् -**

आप्तवाक्यं शब्दः।[4] शब्दस्य प्रामाण्यम् सर्वाणि आस्तिकदर्शनानि स्वीकुर्वन्ति केवलमेकं वैशेषिकदर्शनं विहाय। नास्तिकेषु चार्वाकबौद्धाभ्यां नैवास्य प्रामाण्यं मन्यते। शब्दस्य प्रामाण्यविषये बहूनि कारणानि प्राप्यन्ते। तथा चोक्तम्-

> **प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
> **एनं विदन्ति वेदेन तस्मात् वेदस्य वेदता।।**[5]

भगवता पाणिनिनापि प्रोक्तम् अर्थवदधातुरिति। अत्र अर्थविषयकबोधजनकत्वघटितमेवार्थवत्वं सर्वसम्मतमस्ति। तत्र बोधपदेन शाब्दबोध एवाभिमतः, प्रत्यासन्नत्वात् लाद्यवाच्चेति शब्दप्रमाणं विना नेदं संगच्छते।

अपि च, **तदशिष्यं संज्ञाप्रमाणत्वादिति** सूत्रे संज्ञाशब्दानां प्रामाण्यमुपस्थापयतां सूत्रकाराणां मते शब्दानां स्वीकृतमेव प्रामाण्यम्।

किञ्च, वार्तिककाराणामपि मते, **लोकतो अर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेणधर्मनियमः क्रियते** इति कण्ठत एव स्वीकृतमस्य प्रामाण्यम्।

1. म. भा. प्र. 1/2/64
2. म. भा. 3/2/125
3. म. भा. प्र. उ. 1/2/64
4. तर्कसंग्रह शब्दपरिच्छेदः
5. मनुस्मृति

वाक्यपदीयकारेण एवमेव वदता शब्दस्य प्रामाण्यमुपस्थापितम्। तद्यथा-

**इति कर्त्तव्यता लोके सर्वा [1]शब्दव्यपाश्रया।।**
**अवस्थादेशकालानां [2]भेदाद्भिन्नासु शक्तिषु।**
**भावानामनुमानेन प्रसिद्धिरिति दुर्लभा।।**
**ज्ञाने स्वाभाविकेनार्थः [3]शास्त्रैकोऽपि न विद्यते।**
**धर्मोपज्ञानस्य हेतुश्चेत् तत्राम्नायः प्रयोजनम्।।**
**प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थिता।**
**पितृरक्षः पिशाचानां कर्मजा एव सिद्धयः।।**[4] इति

**अर्थापत्तिप्रमाणम् -**

अनुपपद्यमानार्थदर्शनात् तदुपपादकीभूतार्थान्तरकल्पनम् अर्थापत्तिः-तथाहि, पीनो देवदत्तो दिवा न भुङ्क्ते इति उपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिप्रमायाः लक्षणम्। तत् करणञ्च उपपद्यज्ञानम्। तथा च उपपाद्यज्ञानत्वमर्थापत्तिप्रमाणलक्षणम्। येन विना यदनुपपन्नं तदुपपाद्यम् यस्याभावे यस्यानुपपत्तिस्तत्रोपपाद्यम्। 'यदा रात्रिभोजनेन विना दिवाऽभुञ्जानस्य पीनत्वमनुपन्नमिति तादृशपी-नत्वमुपपाद्यम्। रात्रिभोजनञ्च तदुपपादकम्। रात्रिभोजनकल्पनारूपायां प्रमायाम्, अर्थस्यापत्ति कल्पना इति षष्ठीतत्पुरुषेणार्थापत्तिशब्दो वर्तते। तत्कल्पनाकरणे पीनत्वादिज्ञानेऽर्थस्यापत्तिः अर्थापत्तिर्यस्मादिति बहुव्रीहिसमासेन वर्तते। अनया रीत्या फलकरणोः (प्रमाप्रमाणयोः) उभयोरपि अर्थापत्तिशब्दस्य प्रयोगः सारल्येन अवगम्यते संकेतितं चैतल्लक्षणमुदाहरणं च 'अदर्शनं लोपः' इति सूत्रभाष्ये प्रदीपं विवृण्वता श्रीनागोजिभट्टेन 'किं चानुपपद्यमानेन स्वोपपादकमाक्षिप्यते, यथा पीनत्वेन रात्रिभोजनम्'[5] इति वेदान्तदर्शनानुमोदितमप्येतत्सर्वम्'।[6]

एवम्प्रकारेण विविधशास्त्रान्तविचारमर्मज्ञैः तत्तच्छास्त्रागुणं भिन्नं-भिन्नं प्रमाणं प्रमाणस्वरूपं प्रमाणलक्षणञ्च विविच्यते। शाब्दिकानान्तावन्न तेषां खण्डने मण्डने वा काचिद्विशिष्टा जिज्ञासा। सत्स्वप्यनेकेष प्रमाणेषु यथा भगवता भाष्यकारेणोन्मुक्तकण्ठरवेनोद्घोषितं यत्-'शब्दप्रमाणकाः वयम्, यच्छब्द आह तदस्माकं प्रमाणम्' इत्येतदनुसरन्तः 'ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम्' इति भर्तृहरेराभाणकं दृष्टिपथमवतारयन्तश्च वैयाकरणाः आगमस्यैव प्राधान्यमालम्बन्ते।

---

1. वा. प. 1/121
2. वा. प. 1/32
3. वा. प. 1/135
4. वा. प. 1/36
5. म. भा. प्र. उ.
6. वै. प. अर्था. परि.

# वाक्यपदीयपदकाण्डस्थकालपदार्थस्य महाभाष्यदृष्ट्या पर्यालोचनम्

डॉ. प्रमोदकुमारशर्मा

क्रमशः

## वर्तमानकालः

प्रारब्धापरिसमाप्तत्वमेव वर्तमानत्वम् अर्थात् क्रियारम्भात् क्रियासमाप्तिसमीपं यावत् यावन्तोः अपि क्षणाः सन्ति तेषां समूहे सः वर्तमानकालः अध्यस्तो भवति। कार्यसम्पादनाय मानसिकव्यापारादारभ्य शारीरिकचेष्टां यावत् सर्वः क्रियाकलापः वर्तमानाभ्यन्तरे एव गृहीतो भवति।

क्रमरूपे समूहस्य या विद्यमानता अस्ति सा एव वर्तमानता विद्यते। एकैकस्मिन् क्षणे क्रमः अध्यस्तः अस्ति। एकफलोद्देश्यात् प्रेरितत्वात् कारणात् क्षणसमूहोऽपि एक एव। अथवा अनेकक्षणसमूहात्मकक्रियाप्रबन्धस्य बौद्धिकसंकलनं विधाय गच्छतीति प्रयोगः क्रियते। यद्यपि क्रियाकलापस्य अवयवाः अवकीर्णा (प्रस्फुटिताः) भवन्ति। तथापि ज्ञानात्मनि तेषामाकारः संक्रान्तो भवति। ज्ञानात्मनः एकत्वात् तेऽपि (क्रियावयवाः अपि) एकत्वेन अनुभूयन्ते। अनेन प्रकारेण वर्तमानः अनेकक्षणसमूहात्मकः एक एव अस्ति इत्याह भर्तृहरिः–

कार्योत्पत्तौ समर्थं वा स्वेन धर्मेण तत्तथा।
आत्मतत्त्वेन गृह्येत सा चास्मिन् वर्तमानता।।

क्रियाप्रबन्धरूपं यदध्यात्मं विनिगृह्यते।
संक्रान्तबिम्बमेकत्र तामाहुः वर्तमानताम्।।[१]

## वर्तमानस्य भेदद्वयम्

भर्तृहरिः वर्तमानस्य कालस्य भेदद्वयं चकार।[२] प्रारब्धापरिसमाप्त्यर्थे प्रयुक्तः मुख्यः प्रथमोऽस्ति।[३] द्वितीयश्च वर्तमानसमीपवर्तिभूतभविष्यद्रूपः।[४]

क्रियासमाप्त्यनन्तरं क्रियासंस्काराः अवशिष्यन्ते तानादाय भूतविषयकवर्तमानसामीप्यं भवति। अर्थात् भूतकालार्थे वर्तमानकालः प्रयुज्यते। भविष्यद्विषयकं वर्तमानसामीप्यं तत्र भवति यत्र भविष्यक्रियायाः

१. वा प. प. का. कालसमु. ८९-९०।
२. वर्तमानः द्विधाख्यातः इत्येकादश कल्पनाः इति वा. प. प. का. कालसमु.-३८।
३. मुख्यो वर्तमानः एकः। भूतो भविष्यंश्च, स द्वितीयः। इति हेलाराजः। वा. प. प. का. कालसमु. कारिका-३८। १ भूतं भविष्यदित्येतौ प्रत्ययौ वर्तमानताम्।
४. अत्यजन्तौ प्रपद्येते विरुद्धाश्रयरूपताम्।। इति वा. प. प. का. कालसमु. १०१ कारिका।

मानससंकल्पात् वर्तमानत्वमागच्छति–

**अध्वनो वर्तमानस्य यः शेषो यः उपक्रमः।**
**तद्वर्तमानसामीप्यं शास्त्रे भेदेन दर्शितम्।।**[१]

वर्तमानस्य प्रकारोऽयं वैकल्पिकः अस्ति। अतः 'एष' गच्छामि, अयमागच्छामि, अयमागमम्, एषोऽस्म्यागतः इत्यादिवाक्यानि यथावसरं प्रयुक्तानि भवन्ति। 'वर्तमान सामीप्ये वर्तमानवद् वा' (३-३-१३१) इति पाणिनीयसूत्रस्यापि अयमेव अभिप्रायः।[२]

आशंसार्थेऽपि वर्तमानकालप्रयोगः वैकल्पिकस्वरूपे दृश्यते। अप्राप्तप्रियार्थप्राप्तेच्छा एव आशंसा। प्रार्थनायाः इच्छायाश्च सम्बन्धः वर्तमानादस्ति। परन्तु आशंसायाः विषयः भविष्यकालोऽस्ति। अत एव भाष्ये इमां भविष्यत्काला इत्युक्तं तथाहि–

**आशंसा वर्तमानाऽपि विषयेण भविष्यता।**
**भाष्ये भविष्यत्कालेति कार्यार्थं व्यपदिश्यते।।**[३]

पाणिनिना भूतकालाद् अपि आंशसा संयोजिता।[४] फलतः भूतभविष्यद्वर्तमानाः त्रयोऽपि काला आशंसाभिव्यक्तये प्रयुक्ताः भवन्ति। वस्तुतः आशंसा प्रयोक्तृधर्मोऽस्ति। न तु सः शब्दार्थः। तथापि आशंसा शब्दसंस्कारे निमित्ता भवति पुरुषधर्मेऽपि शास्त्रप्रवृत्तिः भवतीति वाक्यपदीयकारमतमस्ति।[५]

यदाकदाचिच्च भूतार्थेऽपि वर्तमानकालप्रयोगो भवति। तद्यथा–कंसबधः बलिबन्धश्च सहस्त्रवर्षपूर्वमेव जातः। तथापि कंसं घातयति, बलिं बन्धयति इत्येतादृशाः वर्तमानकालिकाः प्रयोगाः दृश्यन्ते। रङ्गमञ्चेषु प्रदर्शितान् कंसबधबलिबन्धव्यापारान् आश्रित्य एते प्रयोगाः जायन्त इति।

शौभिकग्रन्थिकौ तान् व्यापारान् प्रत्यक्षतः प्रदर्शयतः। कथकग्रन्थिकयोः मनसि तेषां व्यापाराणां बुद्धिविषयकसत्ता उपस्थिता भवति। अतः ते तान् प्रत्यक्षमिव अभिव्यक्ती कर्तुं समर्थाः भवन्ति,

---

१. वा. प. प. का. कालसमु. कारिका-(१०२)।

२. "आफलसमाप्तेः क्रियाबन्धोऽव्यपरतो वर्तमानः काल इत्युक्तम्। तस्य च यः शेषः समाप्तत्वेऽपि संस्कारानुवृत्तिलक्षणः तद्भूतविषयः वर्तमानसामीप्यम्। यश्चारम्भोमानसः संकल्पो वर्तमानस्य, तद् द्वितीयं भविष्यद्विषयं वर्तमानसामीप्यम्। तत्र कार्यव्यापारादर्शनाद् वर्तमानतानवसाये भूतभविष्यत्स्वभावे वर्तमानप्रत्ययाः अतिदिश्यन्ते। वा वचनात् पक्षे भूतभविष्यत्प्रत्ययानामनुशासनात् नेदं वर्तमानमेव सद्भेदेनोपादीयते अत्रापि पूर्ववत् स्वकाल एव गच्छामीत्यादिपदस्य संस्कारः। अतो हि वर्तमानस्यैव प्रतीतिः। पदान्तरप्रयोगे तत्काले अध्यारोपः। वावचनात् पक्षेऽध्यारोपितरूपाश्रयाद् भूतभविष्यत्प्रत्ययाः भवन्ति इति नार्थो यत्नेन इति हेलाराजः। वा. प. प. का. कालसमु.-१०२"।

३. वा. प. प. का. कालसमु.-१०३, कारिका।

४. आशंसायां भूतवच्च (३-३-१३२) इति पा. सूत्रम्।

५. "पुरुषधर्मेष्वपि शास्त्रमधिकृतमिति विचारित वाक्यपदीये इति हेलाराजः, वा. प. प. का. कालसमु.-१०५, कारिका।

तथाहि–

**शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान्।**
**प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते।।**[१]

केवलवर्तमानस्य एव न अपितु भूतभविष्यत्कालयोरपि प्रयोगः एतादृशावसरेषु दृश्यते। एकक्रियायाः कालत्रये प्रयोगः इत्थमस्ति–गच्छ हन्यते कंसः। गच्छ घानिस्यते कंसः। किं गतेन? हतः कंसः।

## भूतकालः

यस्य स्वसत्ता समाप्तिं गता भवति सः भूतशब्देनाभिव्यक्तो भवति। समुत्पन्नध्वस्तक्रियोपाधिस्वरूपे भूतकालस्य प्रयोगो भवति।[२] भर्तृहरिणा भूतकालस्य पञ्च भेदाः प्रदर्श्यन्ते– **"भूतः पञ्चविधस्तत्र भविष्यश्च चतुर्विधः"**[३] इति। हेलाराजेन भूतकालस्य पञ्चप्रकाराणामुल्लेखः शब्दशः निम्नप्रकारेण कृतः[४]–

**(क) सामान्यभूतकालः।**

**(ख) अद्यतनभूतकालः।**

**(ग) अनद्यतनभूतकालः।**

**(घ) अद्यतनानद्यतनभूतकालः।**

**(ङ) भविष्यारोपितभूतकालः।**

### (क) सामान्यभूतकालः–

भूतविशेषमनाश्रित्य केवलसामान्यभूतार्थे क्रियाप्रयोगो दृश्यते। पाणिनिना लुङ्लकारप्रयोगः भूतसामान्यं द्योतयितुं कृतः। अगमाम घोषान्, अपाम पयः, इत्यादिप्रयोगेषु विशेषभूतस्य सम्भावनायां सत्यामपि तस्याः अविवक्षायां सामान्यभूतप्रयोगोऽभूत। वस्तुतः विवक्षारूढार्थ एव शब्दप्रयोगस्य निमित्ततां गच्छति। विशेषभूतविवक्षायां उपर्युक्तवाक्येषु विशेषभूतद्योतकलङादिलकारप्रयोगः भवितुं शक्नोति।

---

१. वा. प. प. का. कालसमु. कारि–५।

२. उत्पन्नध्वस्ताः यदा क्रियाः भवन्ति तदा तदुपाधिः कालो भूत इति व्यपदिश्यते। इति हेलाराज, कालसमु. ३७।

३. वा. प. प. का. कालसमु. कारिका–३८।

४. भूतसामान्यं विशेषेभ्यो व्यावृत्तेरेको भूतभेद इति गण्यते। तथा चोक्तं 'सामान्यमपि यथा विशेषः तद्वदि'ति। अद्यतनो द्वितीयो भूतभेदः। अनद्यतनस्तृतीयः। अद्यतनानद्यतनसमुदायः ताभ्यामन्यत्वाच्चतुर्थः। परोक्षस्त्वनद्यतनभेदो न भूतभेदः? इति न पृथग् गण्यते। यस्तु भविष्यन्नप्यतिदेशात् भूतकार्याणि लभते स पञ्चमो भूतभेदोऽध्यारोपितभूतभावो गौणः। इति हेलाराजः वा. प. प. का. कालसमु. कारिका–३८।

'ननु' इति शब्देन सह प्रश्नोत्तरप्रदाने सामान्यभूतार्थे वर्तमानकालप्रयोगो भवति तद्यथा 'अकार्षीः कटं देवदत्त' ननु करोमि भोः। 'नु' शब्देन सह प्रत्युत्तरप्रदानेऽपि सामान्यभूतार्थे वर्तमानकालः विकल्पेन व्यवहृतो भवति। अकार्षीः कटं देवदत्त, नु करोमि भोः अथवा नाकार्षम्।

**(ख) अद्यतनभूतकालः–**

अद्यतनशब्दं परिभाषमाणः श्रीमद्भट्टोजिदीक्षितः सिद्धान्तकौमुद्यामेवमाह– **'अतीतायाः रात्रे पश्चार्धेन आगामिन्याः पूर्वार्धेन च सहितो दिवसः अद्यतनः'** इति। शाब्दार्थस्तु अद्यभवः अद्यतनः। अद्यतनकाले समाप्तीकृता क्रिया अद्यतनभूतकालतया निगद्यते।

अद्यतनोऽपि सामान्योऽस्ति। तदभ्यन्तरे मुहूर्तक्षणादिस्वरूपे अद्यतनस्य अपि एकः विशेषस्वरूपो भवति। एवं रीत्या समुदायावयवयोः भेदमाश्रित्य समवायस्वरूपाद्यतनेऽपि अवयवाद्यतनोस्ति इति निगद्यते। वस्तुतः अवयवातिरिक्तस्वरूपे समुदायसत्ता नास्ति। एकस्य कालस्य कालान्तरेण सह आधाराधेयभावः सर्वथा कल्पितोऽस्ति न तु यथार्थः। एतदेव भर्तृहरिणाप्युच्यते–

**कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः।**
**न च निर्देशमात्रेण व्यतिरेकोऽनुगम्यते।।**[१]

**(ग) अनद्यतनभूतकालः–**

अद्यतनेऽस्ति बहुव्रीहिः। अविद्यमानोऽद्यतनो यस्मिन्निति। अकरोदित्यादिलङ्कारक्रियापदैः। अयमभिव्यज्यते। परोक्षोऽपि अनद्यतनभूतस्य एको भेद एव। अतः एव भर्तृहरिणा अस्य पञ्चभ्यः भेदेभ्यः पृथगुल्लेखो न कृतः।[२] परोक्षशब्दप्रयुक्ताक्षिशब्दः नास्ति नेत्रपरः अपितु इन्द्रियवाचकोऽस्ति। अतः इन्द्रियेभ्यः परं वस्तु परोक्षशब्देन कथ्यते। सर्वोऽपि धात्वर्थः परोक्ष एवास्ति। यतोहि धात्वर्थः साध्यक्रियारूपः भवति। यश्च इदानीं साध्यमानम् अस्ति तद् असद् भवति। यच्च असद् भवति तत्कथमपि इन्द्रियविषयः नैव भवितुमर्हति।

अतः धात्वर्थः परोक्ष एवास्ति। तथापि यत्र साधनप्रत्यक्षो भवति तम् आश्रित्य क्रियाप्रत्यक्षस्य वार्ता लोके दृश्यते। साधनः यद्यपि शक्तिरूपोऽस्ति तथापि द्रव्याश्रितत्वात् द्रव्यप्रत्यक्षेण साधनोऽपि प्रत्यक्षतया स्वीक्रियते। अथवा शक्तिशक्तिमतोऽभेदविवक्षायां साधनम् एव द्रव्यं भवति यत्र च

---

१. हेलाराज अस्य व्याख्यायामेवमुवाच–'अद्यभवोऽद्यतनः कालः, श्वो भवः कालः इति लोके व्यपदेशाद् अविद्यमानोऽद्यतनोऽद्यतनेऽप्यविद्यमानोऽस्तीति लङ्विधौ भाष्ये वचनादित्येवं समुदायावयवभेदपरिकल्पनया कालतत्त्वस्यैकस्यैवाधाराधेयभेदेन निर्देशो दृष्टः। न चैतावता कालो भिद्यते, वैकल्पिकत्वाद् भेदस्य। अति वा. प. प. का. सम्बन्धसमु.–८५, कारिका।

२. 'परोक्षस्त्वनद्यतनभेदो न भूतभेदः इति न पृथग् गण्यते' इति हेलाराजः, कालसमु.–३८ कारिकायाम्।

द्रव्यप्रत्यक्षो भवति तत्र प्रत्यक्षस्य, यत्र च पुनः द्रव्यस्य परोक्षो भवति तत्र परोक्षस्य व्यवहारो भवतीति लोके दृश्यते।

**( घ ) अद्यतनानद्यतनभूतकालः–**

भूतकालस्य अद्यतनानद्यतनोयमिश्रितः एकः अपरः स्वरूपः भर्तृहरिणा स्वीकृतः। अद्यतनानद्यतनयोः समुदायः अनद्यतनाद् भिन्नः अस्ति। अतः अद्यतनानद्यतननाम्ना एकः पृथग् भूतभेदः प्रतीयते। अस्योदाहरणम्–'अद्य ह्यः अभुक्ष्महि' इत्यस्ति[1]।

**( ङ ) भविष्यारोपितभूतकालः–**

पाणिनिना 'आशंसायां भूतवच्च (३-३-१३२) इत्यादिसूत्रैः भविष्यत्कालेऽर्थे भूतकालिकप्रत्ययानां विधानं कृतमस्ति। एतादृशस्थलानां कृते भविष्यत्स्थाने आरोपितभूतकालस्य सत्वात् एकः पृथग्भूतकालभेदः स्वीक्रियते।

## भविष्यत्कालः

भविष्यकालः चतुर्धा अस्तीति भर्तृहरिणा स्वीकृतः। **'भविष्यश्च चतुर्विधः'**[2] इति। अस्य भेदाः अधोलिखिताः सन्ति–

**( क ) सामान्यभविष्यत्कालः।**

**( ख ) अद्यतनभविष्यत्कालः।**

**( ग ) अनद्यतनभविष्यत्कालः।**

**( घ ) अद्यतनानद्यतनभविष्यत्कालः।**

उपर्युक्तभेदेषु सामान्यभविष्यकालस्य निर्देशकः लृट् लकारः अस्ति। अद्यतनभविष्यकालस्य कृते अपि लृट्प्रयोगो भवति। अनद्यतनभविष्यत् अद्यतनभूतमिवास्ति। अस्य द्योतकः लुट् लकारोऽस्ति। अद्यतनानद्यतनसमुदायः अद्यतनाद् भविष्यात् पृथगस्ति।

यथा भविष्यतः स्थाने आरोपितभूतो भवति, तथा अनद्यतनभूतेऽर्थे भविष्यकालस्य अपि आरोपो भवति। यथा–अभिजानासि देवदत्त यत् काश्मीरेषु वत्स्यामः। परन्तु भर्तृहरिणा अयं पृथग्भविष्यद्भेदत्वेन न स्वीकृतः। एवमेव यत्र अनद्यतनभविष्यद् सदपि येषुं सामान्यभविष्यतः प्रत्ययादयः प्रतिषेधात् कृताः भवन्ति तत्र सामान्यभविष्यद् एव स्वीकर्तव्यम्।[3] परिदेवनार्थे अद्यतनभविष्यस्य

१. इति रामसुरेशत्रिपाठी, स्वसंस्कृतव्याकरणदर्शनग्रन्थे पृ. संख्या-२३७।

२. वा. प. प. का. कालसमु. कारिका–३८।

३. यस्तु अनद्यतनवत् प्रतिषेधात् भविष्यत् सामान्यकार्याणि प्रतिपद्यते, सोऽनद्यतनोऽपि शास्त्रव्यवहारो भविष्यत्सामान्येमेव इति हेलाराजः, कालसमु.' –३८।

कृते अनद्यतनभविष्यस्य प्रयोगः एव साधुः भवति। तद्यथा–'इयं कदा नु गन्ता या एवं पादौ निदधाति' इति। लोके भविष्यार्थे भूतस्य प्रयोगः एकवाक्ये दृश्यते। तथाहि–देवश्चेद् वृष्टः निष्पन्नाः शालयः' इति। अत्र वस्तुतः 'संपत्स्यन्ते शालयः' इति वक्तव्यमासीत्। यतोहि इदानीं शालयः निष्पद्यमानाः सन्ति, तेषामनिष्पन्नत्वात्। तथापि लोकः भविष्यकालस्य प्रयोगं न करोतिस्म। तथा कश्चिद् यदि भविष्यकालस्य प्रयोगं करोतिस्म तर्हि तं जनाः प्रतिषेधयन्तिस्म। वाक्यपदीयकारेण भूतकालप्रयोगपक्षे अत्र स्वमतमास्थितम्–

**अप्शालिबीजसंयोगे वर्तते निष्पदिर्यदा।**
**तत्रावयववृत्तित्वाद् भविष्यत्प्रतिषेधनम्।।**
**फलप्रसवरूपे तु निष्पदौ भूतकालता।**
**धर्मान्तरेषु तद्रूपमध्यस्य परिकल्प्यते।।**[1]

अस्मिन् प्रसङ्गे भर्तृहरिणा निष्पत्तिसिद्ध्योः मध्ये भेदः प्रदर्शितः। निष्पत्तिर्हि सा भवति यस्याः हेतवः अनवस्थिताः भवन्ति। परन्तु सिद्धेः साधनः सदा एव सन्निहितो व्यवस्थितश्च भवति। निष्पत्तेः सम्बन्धः हेतुजन्मफल–जन्माभ्याम् उभाभ्यामस्ति। परन्तु सिद्धेः सम्बन्धः फलादेवास्ति। निष्पत्तिः बाह्यसाधनाधीनाऽस्ति परन्तु सिद्धिः अन्तरङ्गसाधनाधीनास्ति। तथाहि–

**निष्पत्ताववधिः कश्चित् कश्चित् प्रतिविवक्षितः।**
**हेतुजन्मव्यपेक्षातः फलजन्मेति चोच्यते।।**
**अबहिस्साधनाधीना सिद्धिर्यत्र विवक्षिता।**
**तत्साधनान्तराभावात् सिद्धिमित्युपदिश्यते।।**
**तस्मादवधिभेदेन सिद्धा मुख्यैव भूतता।**
**अनागतत्वमस्तित्वं हेतुधर्मव्यपेक्षणे।।**[2]

भर्तृहरिणा अवधिभेदमादाय तु उपर्युक्तवाक्येषु भूतभविष्यद्वर्तमानेति कालत्रयाणामपि समर्थनं कृतमस्ति। निष्पन्नाः शालयः, निष्पत्स्यन्ते शालयः, निष्पद्यन्ते शालयः, एतानि वाक्यानि भवितुमर्हन्ति।

वस्तुसत्तामादाय तु भर्तृहरिणा सर्वत्र कालत्रयस्य प्रयोगो भवतीत्युक्तमस्ति। तद्यथा–मार्गे अस्ति कश्चिद् कूपः। यः पथिकः तं प्रत्यक्षीकरोति, तस्य कृते कूपस्य वर्तमानसत्ता अस्ति। यश्च कूपं प्रत्यक्षं कृतवान् अस्ति, तस्य कृते कूपस्य भूतसत्ता अस्ति। यश्च पुनः तं द्रक्ष्यति तस्य कृते कूपस्य भविष्यसत्ताऽस्ति।

---

१. वा. प. प. का. कालसमु. कारिका–१०६–१०७।
२. वा. प. प. का. कालसमु. कारिका–(१०९, ११०, १११)।

इन्द्रियसम्बन्धाभ्याम् एका एव सत्ता विभिन्नव्यपदेशवती अस्ति। तथा च वस्तुन: बौद्धिकसत्ता सदैव वर्तमानस्वरूपे उपस्थिता भवितुं शक्नोति। अनेन प्रकारेण कूपोऽस्तीत्यादयो वर्तमानकालिकप्रयोगा: सर्वथा उपपन्ना: भवन्ति, अस्यामुपलब्धौ भूतभविष्यदादे: विवक्षा प्राधान्यस्वरूपे नोद्भवति, केवलं वस्तुन: सन्मात्रस्य विवक्षा मानसिकग्रहणे परिदृश्यते–

**सतामिन्द्रियसम्बन्धात् सैव सत्ता विशिष्यते।**
**भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धन:।।**

**अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते।**
**य: समासादनाद् भेद: स तत्र न विवक्षित:।।**[१]

## क्रियातिपत्तौ भूतभविष्यौ

प्रतिबन्धकवशात् उत साधनशक्तिवैकल्यात् यदा कस्याश्चिद् क्रियाया: समुत्पत्ति: न भवति तदा सा क्रियातिपत्तिरुच्यते। क्रियानुत्पत्या च भूतभविष्यतो: सम्बन्ध: भवितुं नार्हति। यतोहि उत्पन्नस्य अतिक्रान्तावस्था एव भूतेन द्योत्यते। य: अनुत्पन्नोऽस्ति तेन सह तस्य सम्बन्ध: कथं भवितुं शक्नोति? एवमेव समर्थसाधनसन्निधाने सम्भावितोत्पत्तिक: भविष्यत् भवति। अनुत्पन्नात्मकक्रियातिपत्ते: सम्बन्ध: अनेनापि (भविष्यतापि) सह कथं भवितुं शक्नोति[२]?

अस्य समाधानं कुर्वता भर्तृहरिणा स्वयमेवोक्तम्–यद् अवधिभेदाद् विषयभेदो भवति, तमादाय नास्ति कश्चिद् प्रश्न:। तथाहि–

**प्राग् विरुद्धक्रियोत्पादान्निर्वृत्ते वा विरोधिनि।**
**व्यापारोऽवधिभेदेन विषयस्तत्र भिद्यते।।**[३]

यथा–यदि कमलकमाह्वास्यत् शकटं न पर्यभविष्यद् इत्युदाहरणे कमलक: एतादृश: अस्ति य: शकटं सम्यक्करणे कुशलोऽस्ति। पूर्वावसरेषु तस्य कुशलता परीक्षितास्ति।

अत: भविष्येऽपि कमलकाह्वानं शकटसुरक्षासाधक: अस्ति। अत्र कमलकाह्वानस्य तथा शकटवैकल्यस्य अतिपत्ति: अस्ति। कमलकाह्वानस्य अतिपत्ति: तस्य देशान्तरगमनात् सम्भवास्ति, तथा शकटभङ्गोऽपि अत्यधिकभारात् सम्भवोऽस्ति। एतदवगच्छता एव वक्त्रा प्रयोगोऽयं कृत:। अत्र कमलकाह्वाने शकटपतने च हेतुहेतुमद्भावोऽस्ति। अनेन वाक्येन उभयो: क्रियातिपत्ति: भविष्यत्कालिका

---

१. वा. प. प. का. कालसमु. कारिका–(११२-११३)।
२. क्रियातिपत्तिरत्यन्तं क्रियानुत्पत्तिलक्षण।
न च भूतमनुत्पन्नं न भविष्यत्तथा विधम्।। इति वा. प. प. का. कालसमु., कारिका–९१।
३. वा. प. प. का. कालसमु. कारिका-९२।

प्रतीयते।

वर्तमानकाले तु सः पश्यत्येव यत् अस्मिन् क्षणे कमलकाह्वानं भवितुं न शक्नोति। तथा शकटोऽपि संरक्षितुं शक्यो नास्ति। अतः अत्र भविष्यत्कालसम्बन्धिनी क्रियातिपत्तिः सम्बन्धः भविष्यकालादेवास्ति। एवमेव क्रियातिपत्तेः सम्बन्धः भूतकालादपि सम्भवति। भूतकालदृष्टान्तः अम्बाकर्त्रीव्याख्यायां स्पष्टोऽस्ति।

## व्यामिश्रकालः

संस्कृते एतादृशानि बहूनि वाक्यानि प्राप्नुवन्ति, येषु परस्परविरुद्धकालद्वयं युगपद् भवति। तद्यथा–

१. भावि कृत्यमासीत्।
२. आग्निष्टोमयाज्यस्य पुत्रो जनिता।
३. साटोपमुर्वीमनिशं नदन्तो ये प्लावयिष्यन्ति समं ततोऽमी।
४. गोमान् आसीत् इत्यादीनि।

अत्र प्रथमवाक्ये भाविशब्दे भविष्यकालस्य प्रत्ययो भवति, तथा आसीदित्यत्र भूतकालस्य ज्ञानं भवति। द्वितीयवाक्ये 'अग्निष्टोमयाजी' इति शब्दे भूतकालस्य प्रत्ययो भवति, तथा 'जनिता' इत्यत्र भविष्यकालोऽस्ति। तृतीयवाक्ये 'नदन्तः' इत्यत्र वर्तमानकालस्य तथा 'प्लावयिष्यन्ति' इत्यत्र भविष्यत्कालस्य सम्बन्धोऽस्ति। चतुर्थवाक्ये वर्तमानकालस्य[1] भूतकालात् सम्बन्धोऽस्ति। पाणिनिना एतादृशप्रयोगेषु साधुतायै 'धातुसम्बन्धे प्रत्ययाः' इति सूत्रं विरचितम्। धात्वर्थेषु परस्परं सम्बन्धः सम्भवोऽस्ति। स च विशेषणो भवति तथा तिङन्तवाच्यार्थः प्रधानत्वात् विशेष्यो भवति। 'अग्निष्टोमयाजी' इत्यत्र भूतकालः विशेषणमस्ति।

'जनिता' इत्यत्र भविष्यत्कालः विशेष्योऽस्ति। विशेषणविशेष्यसम्बन्धबलात् भूतकालः भविष्यता सह सम्मिल्य भविष्यत्कालो भवति, अस्य प्रधानत्वात्। भर्तृहरिणा अस्य समर्थनमेव कृतम्–

**शुद्धे च काले व्याख्यातमामिश्रे न प्रसिद्ध्यति।**
**साधुत्वमयथा कालं तत्सूत्रेणोपदिश्यते।।**[2]

---

१. "तथा यदि स ब्राह्मणो ब्राह्मणार्थिना तेन यजमानेन दृष्टोऽभविष्यदुताभोक्ष्यत, अपि अभोक्ष्यत, न तु द्रष्ट इत्यत्रादर्शनस्य भोजनप्रतिद्वन्द्विनो व्यापारस्य अतीतत्वात् क्रियातिपत्तेरपि क्रियाविरोधिव्यापारनिर्वृत्तिरूपावधि-भेदादतीतविषयतया भूतत्वेन व्यवहारः इति। इति अम्बाकर्त्री, कालसमु. कारिका-९२।"
२. वा. प. प. का. कालसमु.–९८ कारिका।

तदेवम्प्रकारेण भर्तृहरिणा एकादशप्रकारकः कालः स्वीकृतः।

**भूतः पञ्चविधस्तत्र भविष्यश्च चतुर्विधः।**
**वर्तमानो द्विधा ख्यातः इत्येकादशकल्पनाः।।**[१]

भर्तृहरिदर्शने एते सर्वे कल्पितभेदाः व्यवहारसुविधां दृष्टौ निधाय कृताः।

**विकल्परूपं भजते तत्त्वमेवाविकल्पितम्।**
**न चात्र कालभेदोऽस्ति कालभेदश्च गृह्यते।।**[१]

## आचार्यभर्तृहरिवर्णितं कालपदार्थपर्यालोचनायां महाभाष्यस्य प्रभावः

महान् दार्शनिकाचार्यो भर्तृहरिः कालस्वरूपनिरूपणावसरे महर्षिपतञ्जलिविरचितव्याकरण-शास्त्राकरग्रन्थमहाभाष्याद् प्रभावितो भूत्वा कालस्वरूपमुपवर्णितवानस्ति। महाभाष्ये काललक्षणं भाष्यकृतोक्तं यत् **"येन मूर्तीनाम् उपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमित्याहुः"**[३] इति। भर्तृहरिरपि एवमेवाह–

**मूर्तीनां तेन भिन्नानामाचयापचयाः पृथक्।**
**लक्ष्यन्ते परिणामेन सर्वासां भेदयोगिना।।**[४]

सः कालः क्रियारूपः इति महाभाष्ये दृश्यते-**नान्तरेण क्रियां भूतभविष्यद्वर्तमानकालाः व्यज्यन्त इति।**[५] वाक्यपदीयेऽपि एवमेव– **'काल एव हि विश्वात्मा व्यापार इति कथ्यते**[६]। कालः एक एवास्ति, भेदास्तु औपाधिकाः इति महाभाष्यमतमनुकरोति भर्तृहरिः–

**तस्यात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयैः।**
**न हि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते।।**
**नैको न चाप्यनेकोऽस्ति न शुक्लो नापि चासितः।**

**द्रव्यात्मा स तु संसर्गादेवंरूपः प्रकाशते।**
**संभिन्नस्तै र्व्यवस्थानां कालो भेदाय कल्पते।।**[७] इति।

---

१. वा. प. प. का. कालसमु.–३८ कारिका।
२. वा. प. प. का. कालसमु.–८ कारिका।
३. कालाः परिमाणिना–२–२–५, महाभाष्यम्।
४. वाक्यपदीय प. का. कालसमु. कारिका।
५. म. भाष्यम्, तपरस्तत्कालस्य–(१–१–६९)
६. वा. प. प. का. कालसमु.–कारिका–१२।
७. वा प. प. का. कालसमु. कारिका–६–७–८।

भाष्योक्तात् **"बाह्यश्च पुनरास्यात् काल:**[१] इति वचनात् अस्माद् क्रियात्मक: परिच्छेदक: काल" इत्यर्थ: निस्सरति भर्तृहरिरपि काल: क्रियापरिच्छेदात्मक: अस्ति इति प्रस्तौति–

**क्रियान्तरपरिच्छेदे प्रवृत्ता या क्रियां प्रति।**
**निर्ज्ञातपरिणामा सा काल इत्यभिधीयते।।**[२]

अग्रे पुन: भाष्यकार: **'नित्ये कालनक्षत्रे'** इति वचनात् कालस्य नित्यतां स्वीकरोति। भर्तृहरिरपि कालस्य नित्यतायामाह– **'स नित्य: परमात्राभि: कालो भेदमिहार्हति'**[३] भाष्यकारमते काल: अनुमानगम्योऽस्ति। यथा पिण्डीभूतक्रियाया: प्रत्यक्षदर्शनं न सम्भवति एवमेव कालस्य प्रत्यक्षदर्शनं न सम्भवति– **सूक्ष्मो हि भावोऽनुमितेन गम्य:**[४] इति। भर्तृहरिरपि कालस्य अनुमानतायां विश्वसति मूर्तपदार्थानामुपचयापचयाभ्यां कालस्य अनुमानं भवति। उदयास्तयो: चिरक्षिप्रयोश्च ज्ञानेन कालस्य अनुमानं क्रियते–

**क्रिययोरपवर्गिण्योनार्थसमवेतयो:।**
**सम्बन्धिना विनैकेन परिच्छेद: कथं भवेत्।**[५]

कालस्य भेदेषु भूतभविष्यद्वर्तमाना: एते त्रयो मुख्यभेदा: दृश्यन्ते। क्रियया कालस्य भेदो भवति, क्रियां विना कालभेदो न सम्भवति अत एव आह पतञ्जलि: **नान्तरेण क्रियां भूतभविष्यद्वर्तमानकाला: व्यज्यन्त इति**[६] इति। भर्तृहरिरपि कालभेदो क्रियाकृतो भवतीति उल्लिलेख। कालस्य व्यवहारे औपाधिका: त्रयो भेदा: क्रियाकृता: सन्ति। क्रियां विना नायं भेद: भवितुमर्हति–

**"तस्याभिन्नस्य कालस्य व्यवहारे क्रियाकृता:।**
**भेदा इव त्रय: सिद्धा: यांल्लोको नातिवर्तते।।**[७]"

## वर्तमानतायामाक्षेप:

वर्तमानकाल: अस्ति न वा? इति विषये यदि विचार: प्रचाल्यते तर्हि वर्तमानोपरि आक्षेप: अस्ति। पूर्वपक्षमुद्भावयता भाष्यकृतोक्तम्–

---

१. महाभाष्यम्–अइउण्, द्वितीयाह्निकम्
२. वा. प. प. का. कालसमु. कारिका–७७
३. वा. प. प. का. कालसमु. कारिका–२४।
४. म. भा. (३–२–१२३)।
५. वा. प. प. का. कालसमु. कारिका–२७।
६. म. भा.– (१–१–६९)।
७. कालसमु. कारिका–४८।

**'नास्ति वर्तमानः कालः'**[१] इति। अर्थात् प्रारब्धं कार्यं यदा निष्पद्यते तदा तस्य भूतत्वं समायाति। यदा तत्कार्यं न सम्पद्यते तदा तस्य भावित्वेन भविष्यत्वमेव। ताभ्यां व्यतिरिक्तश्च नास्ति कश्चन कालः। तथा च यतो निष्पन्नानिष्पन्नरूपार्थस्य अस्तित्वं न विद्यते अतः सः नास्ति। अत एव महाभाष्ये उदाहृतम्–

**न वर्तते चक्रमिषुर्न पात्यते।**
**न स्यन्दते सरितः सागराय।।**
**कूटस्थोऽयं लोको न विचेष्टितोऽस्ति।**
**यो ह्येवं पश्यति योऽप्यनन्धः।।**[२]

अतः कैयटोऽप्याह–

**निष्पन्नस्यार्थस्य भूतत्वादनिष्पन्नस्य अर्थस्य भावित्वान्निष्पन्नव्यतिरेकेण रूपान्तरस्याऽभावः'**[३] इति। भर्तृहरिणाऽपि अस्य आक्षेपस्य उल्लेखः कृतः। तद्यथा–

**सदसद्वापि वस्तु स्यात् तृतीयं नास्ति किञ्चन।**
**तेन भूतभविष्यन्तौ मुक्त्वा मध्यं न विद्यते।।**[४]

हेलाराजोऽपि अस्य व्याख्यायामाह–

**ततश्च वर्तमानता धात्वर्थविशेषणं नोपपद्यते तदुक्तं भाष्ये–**

**अनागते न पतसि अतिक्रान्ते च काक न।**
**यदि सम्प्रति पतसि कृत्स्नो लोकः पतत्ययम्।।** हिमवानपि चलतीति[५] इति।

अस्याक्षेपस्य निराकरणं कुर्वता इदमुच्यते यत् **'अस्ति वर्तमानः कालः आदित्यगतिवद् नोपलभ्यते'**[६] इति। तथा च कैयटोऽप्याह– **'अनेकक्षणसमूहात्मकस्य धातुवाच्यस्यार्थस्य क्रियारूपस्य युगपदसन्निधानादनुमीयते'**[७] इति। वर्तमानकालस्य यल्लक्षणं भाष्यकृतोक्तं यत् **"एष नाम न्याय्यो वर्तमानः कालः यत्रारम्भोऽनपवृक्तः"**[८] एतादृशमेव लक्षणं वर्तमानस्य भर्तृहरिणापि स्वीकृतम्–

---

१. म. भाष्यम्–(३-२-१२३)।
२. म. भाष्यम्–(३-२-१२३)।
३. प्रदीपः (३-२-१२३)।
४. वा. प. प. का. कालसमु. कारिका–८५।
५. महाभाष्यम्–(३-२-१२३)।
६. महाभाष्यम्–(३-२-१२३)।
७. प्रदीपः (३-२-१२३)।
८. महाभाष्यम्–(३-२-१२३)।

व्यवधानमिवोपैति निवृत्त इव दृश्यते।
क्रियासमूहो भुज्यादिरन्तरालप्रवृत्तिभि:।।

न च विच्छिन्नरूपोऽपि सोऽविरामान्निवर्तते।
सर्वै हि क्रियाऽन्येन संकीर्णेवोपलभ्यते।।

तदन्तरालदृष्टा वा सर्वैवावयवक्रिया।
सादृश्यात्सति भेदे तु तदङ्गत्वेन गृह्यते।।[१]

अर्थात्–काचिदपि क्रिया एतादृशी नास्ति या अन्याभ्य: क्रियाभ्य: संकीर्णा इव न स्यात्। नापि निमेषश्वासादि सदृशक्रिया: सर्वव्यापारै: सह संयुक्ता: अपि भवन्ति। अत: अन्तरालवर्तिक्रियाभि: मुख्यक्रियाणां व्यवधानं न भवति। अन्तरालवर्तिक्रिया: मुख्यक्रियाया: अवयवीभूता: भवन्ति। भोजनसमये हासादिव्यापारो भोजनक्रियाया: अवयवीभूतोऽस्ति। अतो नायं व्यापारो व्यवधायको भवितुं शक्नोति। यथा भोजनारम्भानन्तरं समाप्तिं यावत् दधिशर्करादिपरिवेषणं भुजिक्रियाङ्गतया स्वीक्रियन्ते तथैव परस्परमित्रपरिवेषणं भुजिक्रियाङ्गतया स्वीक्रियन्ते तथैव परस्परमित्रपरिहासवार्तालापोऽपि भुजिक्रियैवास्ति। अत एव आह पतञ्जलि:–

**"यं खल्वपि भवान् मुक्तयंशयं वर्तमानकालं न्याय्यं मन्यते भुङ्क्ते चैत्र इति तेनैतत्तुल्यम्। साऽपि ह्यवश्यं भुञ्जानो हसति वा, जल्पति वा, पानीयं पिवति वा। यद्यत्र युक्ता वर्तमानकालता दृश्यते, इहापि युक्ता दृश्यताम्[२]"** इति। भाष्यव्याख्याता कैयटोऽपि एवमेव स्वीकरोति– **"अध्ययनं यदा प्रवृत्तं न चोपरतं तदा तस्य भोजनादि– क्रियानान्तरीयकत्वाद् अव्यवधायिका। अथवा अध्ययनस्यैव अध्ययनक्रिया"[३]** इति।

तदेवं वाक्यपदीयकार: महाभाष्यकारमतं सम्यक् प्रतिपादयति। वर्तमानस्य भेदद्वयं भवतीति भाष्यकृता कण्ठत: नोक्तं परन्तु व्यवहार: कृत:[४]। अत: भर्तृहरिरपि द्विप्रकारकवर्तमानं स्वीकरोति। कण्ठतश्चोक्तम्– **वर्तमानो द्विधाख्यात:[५]** इति। भूतकाल: अल्पसत्तापरिसमाप्तावपि भवति इति पतञ्जलिनोक्तम् **"एष च न्याय्यो भूतकालो यत्र किञ्चिदपवृक्तं दृश्यते।[६]"** कैयटोऽप्याह– **यस्य स्वसत्ता व्यपवृक्ता तत्सर्वं भूतशब्देनोच्यते[७]** इति। **उत्पन्नध्वस्ता: क्रिया: भवन्ति तदा**

---

१. कालसमुद्देश:, कारिका–८३–८३–८४।
२. म. भाष्यम्–(३–२–१२३)।
३. प्रदीप: (३–२–१२३)।
४. महाभाष्यम् हेतुमति च (३–१–२६)।
५. कालसमु. का. ३८।
६. म. भाष्यम्–(२–२–८४)।
७. प्रदीप: (२–२–८४)

**तदुपाधिः कालो भूत इति व्यपदिश्यते**[१] इति हेलाराजोवाच।

भर्तृहरिरपि आह– **"क्रियोपाधिश्च सन् भूत"**[२], भूतकालस्य कति भेदाः सन्ति? इति महाभाष्ये नोक्तं परन्तु भर्तृहरिणा भूतकालस्य पञ्चप्रकाराः स्वीकृताः सन्ति। अनेनेदं सिद्ध्यति यद् भाष्यकारः भूतकालभेदं न स्वीचकार।

एकत्र तु भाष्यकृता स्पष्टीकृतं विद्यते यत् **"अद्यतनेऽपि अद्यतनो विद्यते। कथम्? व्यपदेशिवद्भावेन"**[३] इति। किन्तु कण्ठतः पञ्चभेदाः न स्वीकृताः भर्तृहरिणा पञ्चविधोऽयं भूतः इति स्पष्टमुक्तम्[४]।

भविष्यत्कालः चतुर्विधः अस्ति। इति भर्तृहरिः प्रोवाच।[५] भाष्यकृता भविष्यत्कालेऽपि भेदाः न स्वीक्रियन्ते। कण्ठरवेण कुत्रचिदपि नोक्तम्। परन्तु व्यवहारदृष्ट्या भूतभविष्यतो नवप्रकारककल्पना दृश्यते इति पूर्वमेव प्रतिपादितमस्ति। भूतस्य त्रयो भेदाः भविष्यत्कालस्य अपि त्रयो भेदा एव भवितव्याः।

तदेव महाभाष्यदिशा षड्प्रकारकौ भूतभविष्यकालाविति स्वीक्रियताम् इति सविस्तरं पूर्वमेव प्रपञ्चितमस्ति।

व्यामिश्रकालस्य चर्चा भाष्यकृता सम्यक्कृता अस्ति **"अद्य ह्यश्चाऽभुक्ष्महीति व्यामिश्रे लुङेव"**[६] इति। भाष्यकारस्य व्यामिश्रकालस्य प्रमावेण प्रभावितः भर्तृहरिरपि आह–

**शुद्धे च काले व्याख्यातमामिक्षे न प्रसिध्यति।**
**साधुत्वमयथाकालं तत्सूत्रेणोपदिश्यते।।**[७] इति।

अनेन प्रकारेण महाभाष्यसम्मतकालस्वरूपं कालसमुद्देशे दृश्यते। एतदतिरिक्तरूपेण अपि कालस्य चर्चा भर्तृहरिणा कृता अस्तीति पूर्वमेवोक्तम्।

## समीक्षा

भर्तृहरेः कालदर्शनस्य यदि समीक्षा क्रियते तर्हि इदं नान्तरीयकतया दृष्टिपथं समापतति यत् संस्कृतभाषायां क्रियापदानां या प्रक्रिया लकारेषु पाणिनिना उपनिबद्धा आसीत् तस्याः सम्यगुपयोगः

१. वा. प. कालसमु.–३७। हेलाराजः।
२. वा. प. कालसमु.–३७।
३. महाभाष्यम्–(३-२-१११)।
४. भूतः पञ्चविधस्तत्र इति कालसमु.–३८, कारिका।
५. भविष्यंश्च चतुर्विधः इति कालसमु.–३८।
६. म. भाष्यम्–(३-२-१)।
७. वा. प. का. कालसमु.–९८, कारिका।

कदा? कस्मिन् काले? कस्यां परिस्थितौ स्यात्? इति ध्येयमादाय कालसमुद्देशस्य आवश्यकता अनुभूता भर्तृहरिणा।

यद्यपि व्याकरणस्य आकरग्रन्थे महाभाष्ये भगवता भाष्यकृता स्वशैल्यां सर्वं निगदितमासीत्, तथापि कालविषये विभिन्नदर्शनसम्प्रदायेषु कश्चिद् निश्चितस्वरूपः कालस्य नोल्लिखितः आसीत् इति भ्रान्तिं विभाव्य भर्तृहरिणा कालस्य वास्तविकस्वरूपनिरूपणेच्छया तद्दर्शनदर्शितकालदर्शनं प्रदर्श्य संस्कृतभाषोपयोगिमहाभाष्यकृद्- कालदर्शनं समुपस्थितापितम्। इदम् एव कारणं यद् भर्तृहरेः कालचिन्तनं महाभाष्यकृता सममस्ति।

महाभाष्यदीपिकाख्यव्याख्या भर्तृहरिणा स्वयमेव रचिता इति श्रूयते। महाभाष्यस्य गूढार्थज्ञात्रा भर्तृहरिणा कालविषयकः महाभाष्यकृदभिप्रायः सम्यगवलोकितः आसीत्, अत एव तस्य प्रभावः तत्र तत्र कालसमुद्देशे परिलक्ष्यते। कालः एकादशभेदात्मकः भवतीति महाभाष्ये कुत्रापि नास्ति। किन्तु संस्कृतभाषावाक्यप्रयोगेषु महाभाष्यकृता अपि एतादृशप्रयोगाः कृताः विद्यन्ते येन कालस्य एकादशधा विभागः भवितुमर्हति। तन्महाभाष्यीयवाक्यप्रयोगं स्मृत्वा-स्मृत्वा, दर्शं दर्शं स्वमतिस्थितं कालस्वरूपमुद्भावितं भर्तृहरिणा।

यद्यपि अनेनेदं निश्चीयते यद् भर्तृहरेः कालदर्शनं महाभाष्यप्रभावितमस्ति। तथापि महाभाष्ये कुत्रापि कालः शक्तिस्वरूपे न दृश्यते। स्वातन्त्र्यशक्तेः चर्चैव नास्ति। प्रतिबन्धशक्तिः, अभ्यनुज्ञाशक्तिः, जराख्यशक्तिः, क्रमाख्यशक्तिः, इत्येवं कालशक्तिभेदाः ये भर्तृहरिणा वाक्यपदीये पदकाण्डे कालसमुद्देशे प्रदर्शिताः एतादृशभेदानां महाभाष्ये नास्ति कुत्रचिदपि उल्लेखः इति निश्चयेन वक्तुं शक्यते। महाभाष्यकारस्तु कालं क्रियात्मकं स्वीचकार। तस्य मते सर्वेऽपि कालभेदाः क्रियाकृताः सन्ति।

सांख्यनये कालः कवलीकृतः आचार्यैः, तथापि भर्तृहरिसमये सांख्यनये कालस्य अवधारणा आसीदिति पूर्वं स्पष्टीकृतं भर्तृहरिणा। अतः कालसमुद्देशपरिशीलनाद् नेदं विज्ञातं भवति यत् भर्तृहरिः महाभाष्याद् पूर्णरूपेण प्रभावितः आसीत्। कालस्य शक्तिकल्पना भर्तृहरेः स्वकीया अद्वितीयास्ति। सर्वदर्शनविलक्षणाभिनवकल्पनेयं तस्य मौलिकचिन्तनमस्ति।

यद्वा भर्तृहरिः अयं काश्मीरशैवागमाद् प्रभावितः भवितुं शक्नोति यतो हि तत्र कालः शक्तिरूपे वर्णितः। आगमपरम्परा च अतीव प्राचीनाऽस्ति इति सम्भाव्यते। अतः तत एव भर्तृहरिः प्रभावितो भूत्वा कालं शक्तिस्वरूपे उपवर्णयति इति वक्तुं शक्यते। इति शम्।

# उपसंहारः

तदिदं निश्चप्रचं यत् जगदिदं परिवर्तनात्मकमस्ति। रात्रिः गच्छति, दिवसः समायाति, हेमन्तबसन्तादयः क्रमशः पुनरागच्छन्ति। ग्रहनक्षाणि अनवरतगतिशीलानि सन्ति। किमपि वस्तुजातं स्वस्मिन् क्षणस्थायि नास्ति। कदाचित् तद् वस्तु वर्धयद् अस्ति कदाचिच्च न्यूनतामनुभवद् भवति। अस्य परिवर्तनावस्था विशेषावबोधाय अवस्थानां पूर्वापरसम्बन्धज्ञानाय कस्यचित् तु आश्रयोऽपेक्षितो भवति, तादृशाश्रयः एव कालोऽस्ति।

ऋग्वेदे कालस्य स्वरूपं प्राप्यते। तत्र एवमुक्तमस्ति यद् देशकालादयः पुरुषस्य विकारभूताः सन्ति। सूर्यचन्द्रयोः समुत्पत्तिः पुरुषादेव, बसन्तग्रीष्मशरत्प्रभृतयः पुरुषस्य क्रियात्मकाः एव **"बसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्हविः"**[१] इति। कालोऽपि पुरुष एव अस्ति– **"पुरुष एवेदं सर्वं यद्भतं यच्च भाव्यम्"**[२] इति। अथर्ववेदे कालः परमदेवतास्वरूपे स्थितः अस्ति। काल एव स्रष्टा अस्ति। काल एव भर्ताऽस्ति। काले सर्वं प्रतिष्ठितमस्ति। कालादेव समग्रविश्वविकासः सञ्जायते–

**काले भूतिमसृजत् काले तपति सूर्यः।**
**कालो ह विश्वाभूतानि काले चक्षुर्विपश्यति।।**[३]

**कालादापः समभवन् कालाद् ब्रह्म तपो दिशः।**
**कालेनोदेति सूर्यः काले निविशते पुनः।।**[४]

कालस्वरूपचर्चा उपनिषत्स्वपि प्राप्यते–

**'कालः स्वभावो नियतिः यदृच्छा-**
**भूतस्य योनिः पुरुष इति चिन्त्या।।**[५] इति।

---

१. ऋक्, संहिता, पुरुषसूक्त–(१०-९०)।
२. ऋक् संहिता, पुरुषसूक्त–(१०-९०-२)।
३. अथर्वसंहिता (१९-५३-६)।
४. अथर्वसंहिता (१९-५४-१)।
५. श्वेताश्वेतरोपनिषद्।

पुराणेषु कालः देवता स्वरूपे स्थितोऽस्ति। महाभारते– **"कालः पचति भूतानि कालः संहरते प्रजाः"** इत्युक्तमस्ति। **"कालोऽस्मि लोकक्षयकृत् प्रबृद्धः"**[१] इति।

**"अहमेवाक्षयः कालः"**[२] इति। **"अहमादिश्च मध्यं च भूतानामन्त एव च"**[३] इति। **"कालः कलयतामहम्"**[४] इति।

**"मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः"**[५] इति वाक्यानि गीतायामपि दृश्यन्ते। **"जन्यानां जनकं कालः जगतामाश्रयो मतः"**[६] इति नैयायिकाः **"आत्मा पुरुषो जीव एव कालः"** इति कश्चिदाह। **"विग्रहवतो महाप्रभावा देवता एव कालः"** इत्यपि केनचिदुक्तम्। **"प्रजानामुत्पत्ति-प्रभृतिहेतुत्वेन प्रजापतिरेव कालः"** इति लगधो मुनिराचष्टे। **"आदित्यग्रहतारादिपरिस्पन्दरूप एव काल"** इति लौकिकाः, **"चित्तपरिणामस्य ज्ञानमेव वास्तविकः कालः"** इति चिद्विलासो सङ्गिरते। भर्तृहरिणा उपर्युक्तसर्वमतमादाय स्पष्टमुक्तम्– **"शक्त्यात्मदेवतापक्षे भिन्नं कालस्य दर्शनम्"**[७] इति। भर्तृहरेः कालदर्शनपीठिकास्वरूपे उपर्युक्तकालसम्बद्धविचाराः आश्रयतां गताः सन्ति।

कालशब्दोत्पत्तिविषये कालः कालयतेर्गतिकर्मणः[८] इति तत्र भवान् यास्काचार्यः। पाणिनीयधातुपाठे कलशब्दसंख्यानयोः, कल क्षेपे, कल गतौ संख्याने च, इति विभिन्नार्थकधातवः सन्ति। क्षीरस्वामिना कलयत्यायुः कालः[९] इत्युक्तम्। **"कालोऽन्यः कलनात्मकः"**[१०] इत्यादिना कालस्यार्थोऽपि क? इति प्रश्नस्योत्तरे एवमाह भर्तृहरिः–

**"सः कलाः कलयन् सर्वाः कालाख्यां लभते विभुः**[११]**"** इति। तदेवं प्रकारेण आचार्यो भर्तृहरिः कालविषयकविचारान् दार्शनिको भूत्वा विचारयति।

अस्य आचार्यस्य कालसम्बन्धिनः स्वकीयाः विचाराः स्वतन्त्रतया सन्ति। व्याकरणसम्प्रदायेऽपि एते न तथा प्रसिद्धिं गताः यथा अन्येषामाचार्याणां सन्ति। पूर्वमेतत् सम्यक् प्रतिपदितं यत् भर्तृहरेः

१. इति गीता, अध्याय–११, श्लोक–३२।
२. इति गीता, अध्याय–१०, श्लोक–३३।
३. इति गीता, अध्याय–१०, श्लोक–२०।
४. इति गीता, अध्याय–१०, श्लोक–३०।
५. इति गीता, अध्याय–१०, श्लोक–३५।
६. इति न्यायदर्शनम्।
७. वा. प. प. का. कालसमु.–६२, कारिका।
८. निरुक्ते–२-२५।
९. अमरकोशः (१-१-५९)।
१०. वा. प. कालसमु.–कारिका–१४।
११. सूर्यसिद्धान्त–(१-१०)।

कालदर्शनं काश्मीरशैवागमेन सह समानतां गच्छति। परन्तु स्वस्वभावानुसारं भर्तृहरिणा कालसम्बद्धानां तेषां दार्शनिकवादानां संकेतो वाक्यपदीये प्रदत्तः, ये तस्मिन् समये प्रसिद्धिं गताः आसन्। हेलाराजस्य कथनमस्ति यत् कालस्य आधारभूतधारणा स्पष्टयितुं भर्तृहरिणा समग्रः एकः समुद्देश एव संरचितः। परन्तु भर्तृहरेरुद्देश्यमिदं कदापि नासीत् यत् कालस्य दार्शनिकदृष्ट्या एव विवेचनं भवेत् यस्य प्रयोगेण संस्कृतक्रियाः विभिन्नलकारेषु प्रतिष्ठिताः स्युः। अतः इदमावश्यकमस्ति यत् एतेषां सर्वलकाराणाम् आधारभूतविद्यमानकालधारणा सुनिश्चिता भवेदिति। न तु कालस्य दार्शनिकविश्लेषणे इतस्ततः परिभ्रमणमात्रं भवेदिति"– **नास्माभिः दार्शनिकविवेकः प्रारब्धः, किन्तु शाब्दे व्यवहारे यदङ्गं तत् परीक्ष्यम्।**

**अस्ति च भिन्नकालः शब्दो व्यवहारोऽभूदस्ति, भविष्यतीति। तत्र यथायोगमविचारित–रमणीयः कालोऽभ्युपगन्तव्यः। इत्यर्थः।**[१] इति। परन्तु संस्कृतभाषायाः अथवा भाषासामान्यस्य स्वव्याख्यायाः सम्बन्धः स्वदर्शनाद् योजयितुमिच्छतीति दृश्यते। इदमाकस्मिकमपि नास्ति।

कालसमुद्देशस्य मुख्यकारिकाणां व्याख्यानानन्तरं हेलाराजेन भर्तृहरिमतस्य सारः एकस्मिन्नवतरणे प्रदत्तोऽस्ति। यत् प्रपञ्चभूतजगतः हेतुभूतविद्यायां पूर्वं भेदावभासरूपप्रपञ्चात्मकजगतः उन्मेषो भवति। भेदश्च देशकालाभ्यां जायते। अनयोर्मध्ये जगत्सृष्टौ कालभेदः प्रथमं भवति, पश्यन्तीरूपसंवित् क्रमरहितोऽस्ति किन्तु यदा अस्याः सम्बन्धः प्राणवृत्तिक्रियातो भवति तदा इयं क्रममाश्रित्य इव कालात्मना प्रकाशिता भवति।

ब्रह्मनाम तत्वं क्रमहीनमस्ति, सम्यग्ज्ञानमयमस्ति, तथा कालादप्रभावितमस्ति। अविद्यायाः प्रभावात् तत् क्रमं गच्छति। तथा तत्तद्रूपेण भासितो भवति।

यतो हि समग्रोऽयं भेदः अविद्यामयोऽस्ति। दृष्टिभेदात् स्वीकृतकालस्य समग्रभेदोऽपि अविद्यायाः सृष्टिरेवास्ति। विद्यायामाविर्भूतायां सत्यां समग्रभेदाः विलीनाः भवन्ति। अतः कालस्य भेदोऽयमपि विलीनतां प्राप्नोति। अतः अयं भेदः समुचितः अस्ति न वा? इति विचारस्य परिणामः व्यर्थपरिश्रमात्मकः एव भविष्यति। व्यवहारदशायां सर्वमसत्यमस्ति तथा सत्यस्य अवधारणं सम्भवं नास्ति। इदमेव तात्पर्यमिति दिग्।[२]

---

१. वा. प. कालसमु. कारिका–५८।

२. हेलाराजः, वा. प. कालसमु. कारिका–६२।

# प्राचीनकाले शिक्षणाधिगमे अध्यापकीयव्यक्तित्वस्य महत्त्वम्

श्रीराजवीरः

प्राचीनकाले शिक्षायाः अधिगमप्रक्रियायामध्यापकानां व्यक्तित्त्वमतीव महत्त्वपूर्णमासीत्। वेद-वेदाङ्ग-उपनिषद्-ब्राह्मण-दर्शन-तन्त्र-आगमप्रभृतिषु प्रायेण निखिलेष्वपि शास्त्रेषु गुरोः स्थानं सर्वोपरि स्वीकृत्य असौ साक्षाद् ब्रह्म-विष्णु-महेशरूपः समुदाहृतः। तथा च प्रसिद्धमेवेदं पद्यरत्नम्-

**गुरूर्ब्रह्मा गुरूर्विष्णुगुरूर्देवो महेश्वरः।**
**गुरूः साक्षात् परब्रह्म तस्मै श्रीगुरवेः नमः।। इति**

पुराकाले गुरूकुलानि गत्वा शिक्षाग्रहीतव्या आसीत्। सम्पूर्णशिक्षा अवधिपर्यन्तं तत्रैव स्थातव्यं भवति स्म, येन अहर्निशं गुरो निरीक्षणे विद्यमानाश्छात्राः अन्तेवासिनो वा अध्यापकानां व्यक्तित्वस्य स्वाभाविकं साक्षात्प्रभावमुपादते स्म।

उपनयनविधिपुरस्सरमाचार्यः शिष्यं ब्रह्मचारिणं वा स्वीये गर्भे-गृह्णाति स्म, त्रिरात्रं यावच्च तं स्वोदरे धारयति स्म च। चतुर्थे दिवसे शिष्यस्य पुनर्जन्म जायते स्म। तदेवं शिक्षोपक्रमात् प्राक् उपनयनसंस्कारः परमावश्यकं आसीत्।

प्राचीनकाले शिक्षायाः उद्देश्यं ज्ञानोपार्जनं, मोक्षाधिगमश्चासीत् अस्मिन् पुण्ये कर्मणि स्वीयगन्तव्यं यावद् सम्प्रापणे गुरुः शिष्यं स्वीयादर्शभूतव्यक्तित्वमाध्यमेन सम्प्रेरयति स्म। अध्यापकः स्वव्यक्तित्वमाध्यमेन शिष्यस्य आध्यात्मिकं विकासं विदधाति स्म।

शिष्याणां पोषकत्वात् सुसंस्काराणां समारेपकत्वाच्च अथर्ववेदे मातापितरौ आचार्यश्च देवतुल्याः कथिताः। तथा च तत्रत्यं वचनम्-

**''मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव।[1] इति**

बहुधा वैदिकवाङ्मयेषु आचार्यः श्रेष्ठः ब्रह्मपदस्य मागदर्शकत्वेन च समुल्लिखितः। अथर्ववेदे पुनरेकत्र आचार्यस्य व्यक्तित्वं चित्रयति उक्तिरेषा-

---

1. अथर्ववेदः- 11/5/3

**''आचार्यस्तक्ष नभसी उभे इमे।**[1]
**उवी गम्भीरे पृथिवीं दिवं च''।।**

अर्थात् आचार्यः ज्ञानस्य अतलस्पर्शी सागरो भवति, स स्वशिष्याय पृथिवीमारभ्य आकाशपर्यन्तानां सार्वत्रिकीनां संगुप्तानां गम्भीरशक्तीनां बोधं प्रददाति।

निरूक्तकृता यास्केनापि प्रोच्यते-

**''गुरूः शिष्योपकर्त्ता सत्यपथस्य च प्रदर्शकः।**[2] इति

छान्दोग्योपनिषदि गुरूमुखारविन्दात् प्राप्तस्य ज्ञानस्य महिमानं समुपवर्णयन् सत्यकामो जाबालः गुरूं कथयति यत् भवादृशानामेव केषाञ्चिदाचार्याणां मुखारविन्दाद् वचनमिदं मया श्रुतमस्ति यद् गुरोरधिगतं ज्ञानं श्रेष्ठं भवति- ''श्रुतं ह्यमेव मे भगवद्धशेभ्यः आचार्येभ्यः विद्या विदिता साधिष्ठं प्रापयतीति तस्मै हैतदेवात्र ह न किञ्चन वीर्यायेति''[3] आपस्तम्बसूत्रेऽपि अध्यापकानां महत्वं स्वीकृतमस्ति-

**''स हि विद्यातस्तं जनयति तच्छेष्ठं जन्म।**
**शरीरमेव मातापितरौ जनयतः।**[4]''

आचार्यमनुः गुरूपासनायाः महत्त्वं प्रतिपादयन् कथयति यत् मातुर्भक्तया इहलोकः पितुर्भक्त्या मध्यलोकः आचार्यभक्त्या तच्छुश्रूषया च ब्रह्मलोकः प्राप्तो भवति-

**इमं लोकं मातृभक्तया पितृभक्त्या तु मध्यमम्।**
**गुरूशुश्रूषया त्वेव ब्रह्मलोकं समश्नुते।** इति।[5]

सुसंस्कारैः विभूष्य शिष्येभ्यः श्रेष्ठजीवनप्रदानादेव गुरूः भगवत् कोटौ संस्थापितोऽस्ति। तस्य महिमानिम्नोक्ते पद्ये प्रकारान्तरेणापि स्फुटीकृतोऽस्ति-

**जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते।**
**विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते।।**[6]

शब्दकल्पद्रूमे प्रोक्तमस्ति यद् गुरूशब्दे प्रत्येकं वर्णाः गुरोः कांश्चन गुणान् इङ्गयन्ति। यथा तत्र गकारः सिद्धिदातृत्त्वं रेफः पापनाशकत्वम् उकारश्च शिवस्वरूपतां विज्ञापयति। अयं तत्व

---

1. अथर्ववेदः- 11/5/8
2. निरूक्तम्
3. छान्दोग्योपनिषद्
4. आपस्तम्बधर्मसूत्रम्
5. आपस्तम्बधर्मसूत्रम् 11/1/15-16
6. मनुस्मृतिः।

त्रयात्मको गुरूरेव सर्वश्रेष्ठो विराजते।

यथोक्तम्-

**गकारः सिद्धिदः प्रोक्तो रेः पापस्य हारकः।**
**उकारो विष्णुरव्यक्तस्त्रितयात्मा गुरूः परः॥[1]**

आचार्यः शंखोऽपि लिखति यत् मातापित्रोःगुरोश्च सर्वदा अर्चना विधातव्या, यतोहि अमीषामनादरेण सर्वाण्यपि कर्माणि निष्फलतां प्रयान्ति-

**माता पिता गुरुश्चैव पूजनीयाः सदा नृणाम्।**
**क्रियास्तस्याफलाः सर्वा यस्यैतेऽनादृतास्त्रयः॥[2]**

मनुस्मृतौ मुनेर्मनोः कथनमस्ति-

**आचार्यस्तस्य यां जातिं विधिवद् वेदपारगः।**
**उत्पादयति सावित्र्या सा सत्या साऽजराऽमरा॥[3]**

अर्थात् वेदपारङ्गतः आचार्यः सावित्रीमाध्यमेन यादृशं जन्म प्रददाति, तदेव वास्तविकं- तदेव चामरमनश्वरश्च।

अथर्ववेदे आचार्यः वरूणनाम्ना उक्तः- वरूणो जलदेवत्वे न ख्यातः। जलस्य- कर्म प्रक्षालनम्। वयं जले वस्त्रं प्रक्षालयामः आचार्यः पुनः शिष्यस्य कोमलं पापं, प्राचीनं संस्कारञ्च।

## अर्वाचीन काले--शिक्षणाधिगमे अध्यापकीयव्यक्तित्वस्य महत्त्वम्

शिक्षणप्रक्रियायामध्यापकस्य भूमिका मूर्धन्यं स्थलमलङ्करोति। शिक्षकः वरतुतः सर्वतोऽधिकं महत्त्वपूर्णं भवति। शिक्षकः स्वीयव्यक्तित्वद्वारा छात्रेषु शिक्षाग्रहणाय इच्छाशक्तिं जिज्ञासां च जनयित्वा तान् जीवने जागरयति।

### मानसिक-विकासः

बालकस्य मानसिके विकासे शिक्षकस्य महत्त्वपूर्णं स्थानं विद्यते। यदि शिक्षकस्य मानसिको विकासः शोभनस्तदाऽसौ बालकं प्रति स्नेह-सहानुभूति-समन्वितं व्यवहारं विधत्ते।

---

1. शब्दकल्पद्रुमः।
2. शङ्खस्मृतिः 3/3
3. मनुस्मृतिः।

**सामाजिक-विकासः**

बालकस्य सामाजिके अपि विकासे शिक्षकः भूयान् प्रभावः परिलक्षितो भवति। अध्यापकः स्वीयेन शान्तेन, शिष्टेन-सहयोगे न भावेन, सहयोग-भाव-भूषितेन सद्व्यवहारेण यच्छात्रानपि-तादृश-शिष्ट-शान्तसहयोगिव्यक्तित्व-शालिनः विधातुं तान् प्रेरयति।

**संवेगात्मक-विकासः**

बालकस्य संवेगात्मकेऽपि विकासे शिक्षकस्य स्पष्टः प्रभाव परिपतति। शिक्षकः शिष्याणां संवेगात्मकव्यवहाराणां कारणानि विचिन्त्य परिज्ञाय च तेषां कृते समुचितं पथि-प्रदर्शनम् आचराते।

**चारित्रिक-विकासः**

बालकेषु चारित्रिकविकासे शिक्षकाणां महत्त्वं सामान्यतः सर्वैरपि जनैः सहर्षं स्वीक्रियते एव। अत्र बीजमिदमस्ति यद् बालकः शिक्षकेषु कमप्येकं स्वीयमादर्शं विधाय तद्वत् आचरितुं प्रारभते। अतः शिक्षकः स्वीयैः उत्तमैः गुणैः, आदर्शे व्यक्तित्वेन च तान् शिष्यान् सञ्चारित्र्यसम्पन्नान् विधातुं प्रयास्यति।

**रूचेः विकासः**

विविध प्रेरणां प्रदाय बालकेषु स्वायं कर्त्तव्यम् अध्ययनं च प्रति रूचिमुत्पादयति एतेन छात्राः सरलतया ज्ञानमुपार्जयितुं प्रभवो जायन्ते।

वर्तमान-शिक्षा-प्रणाल्यां शिक्षा-दातुः कृते आंग्लभाषायां 'Teacher' इति पदं शिक्षक-समानार्थकं, यत्र प्रयुक्तानि प्रत्येकमक्षराणि शिक्षकस्य उत्कृष्टं व्यक्तित्वं, सद्गुणगणञ्च ज्ञापयात, यस्य परिकल्पना हि प्राचीनैरप्याचार्यैर्विहितास्ति।

'Teacher' इत्येतस्मिन् शब्दे क्रमशः 'T' इत्येषः वर्णः Tactful अथवा Traind in Teaching Methodology इत्येतस्यार्थस्य सङ्केतं प्रयच्छति, यस्य तात्पर्यं वाक्यचातुर्यं शिक्षणप्रविधि- नैपुण्यं वा भवति। 'E' इत्येषः वर्णः Ehthusiasm अर्थात् उत्साहगुणस्य सूचकं विराजते, 'A' इत्येतत् अक्षरं Address अथवा Attentiveness अर्थात् ध्यानकेन्द्रीकरणस्य वा द्योतकोऽस्ति, 'C' इति वर्णः पुनः 'Capicity of leadership' अर्थात् नेतृत्वक्षमतामिङ्गयति, 'H' इति वर्णः 'Honesty' अर्थात् न्यायपूर्णतायाः प्रतीकभूतो विद्यते, 'E' इत्यक्षरं Emotional Stobilaty अर्थात् संवेगात्मकसंतुलनस्य गुणं प्रदर्शयति एवं 'R' इति वर्णः त्मेचमबजनिस अथवा त्मेमतअमक अर्थात् आदरणीयस्य, सावधानस्य गम्भीरस्य आत्मसंयतस्य वा शिक्षकस्य गुणं ज्ञापयति।

एतेनेदमपि स्पष्टं जायते यत् शिक्षायाः सम्पूर्ण-प्रक्रियायां गतिशीलतायाः मूलं स्रोतः शिक्षक एव।

अध्यापकः स्वयं समुज्ज्वल-व्यक्तित्व-प्रभावेण शिक्षार्थिषु आत्मानुशासनभावनां समुद्भाव्य मानवजातिमभ्युदयाय निष्णाता विदधाति। सर्वपल्लि-राधाकृष्णन्महोदयेन प्रोक्तमासीत्-''शिक्षकः बौद्धिक-परम्पराणां स्थानान्तरणाय धुरो भूमिकां निर्वहति। असौ मौलिकीं कुशलतां सन्ततिषु विस्तारयति, सभ्यतायाः अखण्डज्योतिः शिखाञ्च ज्वलन्तीं स्थापयति'' इति।

आयोगसदस्यैरि स्वीकृतं यत् शिक्षायाः प्रस्तावितस्य पुनर्निर्माणस्य हेतोः शिक्षकः एव सर्वतोऽधिकं महत्त्वपूर्णं साधनं विलसति।

## अध्यापकानां कृते अपेक्षितं नैपुण्यम्

शिक्षासंस्थायाम् अध्यापकस्य भूमिका सर्वातिशायिनी भवति। अध्यापकश्छात्रान् न केवलं पाठ्यग्रन्थानेवाध्यापयति, अपितु तेषां समग्रव्यक्तित्वस्य विकासं विदधाति। असौ तेषामन्तः प्रविश्य समीक्षणपूर्वकम् आन्तरिकव्यक्तित्वविकासाय सर्वश्रेष्ठमायासमातनोति।

भारतीयसांस्कृतिकपरम्परायां गुरूभ्यः समाजे सर्वोच्चं पदं प्रदत्तमस्ति। असौ देवपदेन विभूषितोऽस्ति-

**गुरूर्ब्रह्मा गुरूर्विष्णुः गुरूर्देवो महेश्वरः।**
**गुरूः साक्षात् परंब्रह्म तस्मै श्री गुरवे नमः।।**

कबीरः कथयति- ''गुरुर्गोविन्दश्चौभावपि मम समक्षं समुपस्थितौ, अहं प्रथमं कतरस्य चरणौ वन्देय। यथोक्तं तेन सुप्रसिद्धेऽस्मिन् भाषापद्ये-

**''गुरूगोविन्द दोऊ खड़े, काके लागूँ पाय।**
**बलिहारी गुरू आपने, जिन गोविन्द दियो दिखाय।''** इति

आचार्यमनोरनुसारं- ''शिक्षकः ब्रह्मणः प्रतिरूपः पितुः बृहस्पतेः मातुः पृथिव्याश्च प्रतिमूर्तिः विराजते। किञ्च मातुः सेवया बालकः संसारमवाप्नोति, पितुः सेवया स संसारे पदाधीनं करोति, परं गुरोः सेवया तस्य साक्षाद् ब्रह्मणः उपलब्धिर्भवति''। इति।

एतस्मिन् प्रसङ्गे सम्प्रति सर्वप्रथमं प्राचीनकाले प्रोक्तानां तदीयानां कासाञ्चित् योग्यतानां विषये विचारणां बिन्दुबद्धपद्धत्या पुरस्तात् प्रस्तूयते।

1) शब्दकल्पद्रुमे गुरोः योग्यताविषये प्रकाशं प्रयच्छता प्रोक्तम्-गुरूशब्दे गकारः सिद्धिदातृत्वस्य रेुः पापनाशकत्वस्य, उकारश्च शिवस्वरूपत्वस्य प्रतीकभूतः। तदेव तत्त्वत्रयात्मको गुरुः सर्वश्रेष्ठः विराजते'' इति। तथा च तत्रत्यं पद्यम्-

**''गकारः सिद्धिदः प्रोक्तो रुः पापस्य हारकः।**
**उकारो विष्णुरव्यक्तस्त्रितयात्मा गुरूः परः॥** इति।[1]

2) अद्वैतारण्योपनिषदि गुरोर्योग्यता एवं निर्दिष्टा 'गु' शब्दः अन्धकारस्य दुर्गुणानां बोधकः, 'रू' शब्दः पुनः तदन्धकारस्य अर्थात् मायाभ्रान्तिसंशयादीनां निरोधकत्वस्य वाचकः तदेवं योऽत्र अविद्यारूपमन्धकारं ज्ञानरूपेण सदुपदेशरूपेण वा महाज्योतिषा दुरीकरोति, स एव गुरुरित्युच्यते। तथा च पद्यम्-

**'गु' शब्दस्त्वन्धकारोऽस्ति, 'रू' शब्दस्तदभिरोधकः।**
**अन्धकारनिरोधित्वाद् गुरुरित्यभिधीयते॥** इति[2]

3) कबीरः कथयति- ''गुरुमुखागतं ज्ञानमेव अन्तःस्थलस्य विषयो भवितुमर्हति। युक्तेः अर्थात् रहस्यस्य ज्ञाता एव च वास्तविको गुरूर्भवति॥ इति।

4) महाभारतस्य रचयिता भगवान् वादरायणोऽपि अध्यापकस्य योग्यतां विवृण्वन् प्राह्-

**प्रवृत्तवाक् चित्रकथः ऊहवान् प्रतिभानवान्।**
**आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते॥** इति।[3]

इमाः-आधुनिकसर्वमान्य-योग्यताः प्रामुख्येन त्रिधा विभक्तुं शक्यन्ते।

1) व्यक्तित्वसम्बन्धिनी योग्यता।

2) शिक्षासम्बन्धिनी योग्यता।

3) व्यावसायसम्बधिनी योग्यता इति च।

1. **व्यक्तित्वसम्बन्धिनी योग्यता**- इयं पुनः सप्तसु उपभेदेषु विभज्यते। तथाहि-

(क) बाह्यमाकर्षणम्-

छात्रान् प्रभावयितुम् अध्यापकस्य शारीरिकपक्षः आकर्षको भवेत्। तस्य वेशभूषा तथा शालीना स्याद् येनासौ अपरेषु स्वीयं प्रभावं पातयितुं क्षमः स्यात्। छात्राः अध्यापकस्य बाह्याकर्षणेन आकृष्टाः, तस्य अरुचिजनकेन आकल्पेन विकृष्टाश्च जायन्ते। बाह्याकर्षणशालिनामध्यामकानां प्रथम दर्शने एव छात्राः स्वतः श्रद्धालुतां प्रतिपद्यन्ते। एतद् आधारीकृत्यैव 'फ्रायड'- महाशयेन उक्तं यद् अध्यापिकाः बालकान् अधिकतरं प्रभावयन्ति। एवम् आकर्षणक्षमाः अध्यापकाः अपि स्वीयेन

---

१. शब्दकल्पद्रुमः पृ.—३४०
२. अद्वैतारण्यकोपनिषद्।
३. महाभारतम्—५—३३—२४

सौन्दर्येन, वस्त्रेन, चातुर्येण च छात्रान् स्वीयं प्रति आक्रष्टुमर्हन्ति। बाह्यरूपेण अध्यापकस्य स्वभावः शान्तः भवेत्। स सदा प्रसन्नवदनः ग्राह्यस्वभावश्च स्यात्। तस्य शिरः जनसाधारणस्य समक्षमुन्नतं तिष्ठेत्।

### (ख) शारीरिकं स्वास्थ्यम्

स्वस्थे शरीरे स्वस्थं मनो निवसति, अतः अध्यापकस्य स्वास्थ्यम् अत्युत्तमं भवितव्यं, येन तस्मिन् प्रेरणाप्रदा शक्तिः, उत्साहः, गतिशीलता च सर्वदा निष्यन्देरन्। अस्वस्थोऽध्यापकः स्वीयशिक्षाविभागस्य विद्यालयाय च साक्षाद् भार एव। यौवन इव वार्धक्येऽपि तस्य स्वास्थ्यं तथैव स्फुर्तियुतं निरोगञ्च भवितव्यं, येन पूर्ववदेवासौ आत्मानं पुण्ये शिक्षणकर्मणि व्यापारयितुं प्रभवेत्!

### (ग) बुद्धिः, बौद्धिकानि वैशिष्ट्यानि च

अध्यापकस्य बुद्धिः निर्मला स्वच्छा च भवितव्या। अध्यापके गम्भीरा विवेकशक्तिः, तार्किकता, नीरक्षीरविवेकिता, मौलिकता, साधनात्मिकी सत्ता, मिलनसारिता चेति परमावश्यकाः गुणाः विलसेयुः।

### (घ) मानसिकीस्वस्थता, भावात्मिकस्थिरता च

अध्यापकः मनसा पूर्णतया स्वस्थः आशावादी च भवेत्। प्रसन्नवदनः आशान्वितः योग्यश्चध्यापक एव स्वशिष्यान् सोल्लासं समध्याप्य शान्तिपूर्णवातावरणस्य स्थापनां कर्त्तुमर्हति। आधुनिकशिक्षकेषु शान्तिः, गंभीरतायाः च अतीव महत्त्वं विराजते।

### (ङ) चारित्रिकी नैतिकी च योग्यता

अध्यापनव्यवसाये इदन्तावत् परमावश्यकं यद् अध्यापकः पूर्णतया सच्चारित्र्येण नैतिकगुणेन च सम्पन्नो भवेत्। सच्चारित्र्यस्य विविधाः परिभाषाः विराजन्ते, परमेतेन तत्त्वेन सर्वे सहमताः सन्ति यद् मानवस्य जीवनं मान्यस्य सामाजिकस्य नैतिकस्य चादर्शस्य अनुरूपं व्यतीतं भवेत्। वास्तविकः सदाचारः नैतिकज्ञानापेक्षया सुतरां महत्तरः।

अध्यापकः स्वकक्षायाम् छात्रान् प्रति न्यायसङ्गतः, पक्षपातहीनः, निरभिमानः, सहृदयश्च भवेत्। तस्य स्वभावः सरलः, कोमलः साधुश्चापेक्षितः। साम्प्रदायिकता ग्राम्यता च न तस्मिन् लेशतोऽपि दृश्येत। प्रत्येकं धर्मं प्रति स सहिष्णुः स्यात्। संक्षेपेणेदं वक्तु शक्यते यत्तस्य चारित्र्यं सर्वोत्कृष्टं भवितव्यम् इति।

### (च) सामाजिकाः गुणाः

अध्यापकेषु सामाजिकाः गुणाः परमावश्यकाः। तेषु सामाजिकवातावरणानुरूपं जीवनं समतिवाहयितुं, तत्र किमपि गुणात्मकं परिवर्त्तनं च विधातुं सामाजिक- दार्शनिकतायाः अपि भावः भूरिशोऽपेक्षितः

विद्यते। नागरिकाणाम् अधिकारान् कर्त्तव्यानि च प्रति स सर्वदा जागरुकास्तिष्ठेत् समाजस्य प्रत्येकं कार्येषु अभिरुचि:, आत्मानं परित: उपलब्धेन वातावरणेन सह सामंजस्य संस्थाप्य जीवन-यापन-कलाविकासश्च तस्मिन् महत्त्वपूर्णौ गुणौ। सामाजिक-दार्शनिकताया: लाभम् अक्षिलक्ष्य ीकृत्य तेन समाजस्य हितैषिणा हितकारिणा च भाव्यम्।

**द्धछत्रू उत्तमव्यक्तित्वसम्बन्धिनी योग्यता**

छात्रस्य सर्वतोमुख-समुन्नतेर्भार: शिक्षकस्योपरि विराजते, अतस्तस्य प्रथमं स्वयं व्यक्तित्वविकास: भवितव्य:। तस्य सभ्यता, बौद्धिकता, सामाजिकता, नैतिकता चात्युत्तमा स्यात्। एभिर्गुणैरेवासौ प्राचीनभारते राजवंशीयेभ्योऽप्यधिकं सम्मानभाजनमासीत्। तस्मिन् काले याज्ञवल्क्य:, द्रोणाचार्य: विष्णुगुप्त:, चाणक्य:, विष्णुशर्मा, शङ्कराचार्य:, कुमारिलभट्ट: रामानुज: इत्येते ख्याता: अध्यापका: ज्ञानिन: सर्वोत्तमा: ;षयश्चासन्। एतेषां सम्मुखं तत्कालिक: सम्पूर्णोऽपि संसार: श्रद्धया अवनत: सन् तच्चरणयो: पुष्पाणि समर्पयन्ति स्म।

अध्यापक: अत्यन्तं न्यायशीलो भवितव्य:। अद्यतनोऽध्यापक: लोकतान्त्रिकीं पद्धतिं समाश्रयेत्। छात्रान् प्रति क्रियमाणेषु व्यवहारेषु स स्वीये दृष्टिकोणे स्वभावे च सर्वथा लोकतान्त्रिक: स्यात् अध्यापक: आत्मविश्वासेन पूर्णोऽपि भवेत्। अध्यापकेन सदा आत्मविश्लेषणमपि करणीयम्। शिक्षकगत व्यक्तित्वसम्बन्धियोग्यता विविधदृष्टिभि: चर्चिता:।

**(२) शिक्षासम्बन्धि योग्यता**

इयमपि उपभेदेषु बोधसौकर्यदृष्ट्या विभक्तुं शक्यते यथा

**(क) साधारणं ज्ञानं वैदुष्यं च-**

आत्मन: परित: स्थितानां पदार्थानां विषये ज्ञानं शिक्षकस्य अध्यापकस्य कृते परमावश्यकम्।

स्वीयेन विस्तृतेन ज्ञानराशिना स शिक्षासम्बन्धिना प्रत्येकेन अङ्गेन आत्मनं परिचितं विधातुं प्रभवति, तदनुसारञ्च स आधुनिकशिक्षक: भवितुं योग्यतां धारयति। आधुनिकज्ञानाभावे विद्यालयेषु प्रवर्त्तमाना: वर्त्तमानकालिके: लोकतान्त्रिकपद्धतिसमनुकूला: विविधा: सामाजिका: सांस्कृतिकाश्च गतिविधय: सर्वथा असंभाविन: एव। भाषाध्यापकस्य कृते स्वविषये सम्पूर्णं ज्ञानमावश्यकम्। स व्याकरणं, शब्दावली:, कोशान् च गहनतया विजानान: स्यात् इति परमम् आवश्यकम्। अध्यापकानां कृते समसामयिकं ज्ञानमावश्यकं भवति।

**(ख) ज्ञानपिपासा, अध्ययनेऽभिरुचिश्च**

ज्ञानपिपासा तदैव शान्तिमुपैतुमर्हति, यदा हृदि समधिकज्ञानप्राप्तिलालसया सहैव अध्ययनेऽपि रुचि: भवेत् अध्यापकस्य कृते इदं परमावश्यकं विद्यते यत् तस्मिन् ज्ञानपिपासा भवेत्, अध्ययने रुचिं च धारयेत्।

**(ग) अभिव्यक्तिः-**

अध्यापकस्य सुस्पष्टता समधुरा च अभिव्यक्तिरेव तदीयायाः स्वविषयकसेवायाः प्रमुखसाक्ष्यं भवति। स छात्रान् प्रति कस्यचिदपि तथ्यस्य निर्देशनं विश्लेषणञ्च स्पष्टतया विशुद्धतया च विदध्यात्। छात्राः हि अध्यापकशैलीमेव साकल्येनानुकुर्वन्ति। अतः अध्यापकेषु एते गुणाः नूनं भवितव्याः। तस्य स्वरः नितान्तं सुस्पष्टः, रुचिजनकः यथारूपः श्रवणयोग्यः, आकर्षकश्च स्यात्।

**(घ)** लेखनकार्य प्रियक्रीडासु रुचिः, जिज्ञासुभावना च अध्यापकेषु अभिव्यक्तिसाधुतया सहैव लेखनकौशलमपि परमावश्यको गुणः। यदा ते लेखनकौशले दक्षाः भविष्यन्ति तदैव ते छात्रेषु लेखननैपुण्यस्य विकासं कर्त्तुं पारयिष्यान्ती।

**3. व्यावसायिकी योग्यता**

इयमपि तावत् केषुचिदुपभेदेषु विभज्यते, येन वितरतः बिन्दोरस्य स्पष्टीकरणं सम्भवेत्। यथा-

**(क) सेवाकालिकं प्रशिक्षणम्**

सेवातः प्राक्तनं प्रशिक्षणमेतस्य अध्यापनव्यवसायस्य प्रवेशद्वारं, येन शिक्षणविधेः परिचयः समवाप्यते। तथापि कार्ये लीनं प्रशिक्षणसेवायां व्यावसायिककलायाः ज्ञानं भवितुमर्हति। एतत् संक्षिप्तं प्रशिक्षणसेवाकार्यं सभासु, विश्रान्तिषु अध्यापकक्रमे, संगोष्ठीषु, कार्यशालासु, महतानां भावनानां प्रदर्शकेषु, वादविवादेषु च पूर्णतां प्राप्तुमर्हति।

**(ख) व्यवसायात् प्राक्तनं प्रशिक्षणम्**

इदमनुमीयते स्म कदाचिद् यद् अध्यापकानां कृते अधीतपूर्वाणां विषयाणां ज्ञानमेव पर्याप्तं भविष्यति, यानिमे अध्यापयन्ति, परन्तु इदानीमिदं स्फुटतयाऽनुभूयवमानमस्ति यत्ते विस्तृतज्ञानभाण्डागाराणि भवेयुः। इतरव्यवसायसमूह इव अध्यापनमपि एको विशिष्टो व्यवसायः विद्यते, यदर्थं यथायोग्यं ज्ञानं, कौशलम्, अध्यापञ्च आवश्यकं भवति। अध्यापकानां कृते व्यावसायिकं प्रशिक्षणं परमावश्यकं विलसति।

**(ग) अध्यापनतया प्राप्ताः अनुभवाः**

अधिकानुभवशाली अध्यापकः वस्तुतः विद्यालयीयवातावरणेन परिचितो जायते। शिक्षकरूपेण कतिपयान् गुणानादत्ते, तस्य प्रकृतिः स्वभावो वा शनैः शनैः एकं विशिष्टं रूपं स धारयति।

**(घ) व्यवसायमपरान् गुणांश्च प्रतिश्रद्धा-**

स्वव्यवसायं प्रति श्रद्धाभावः अध्यापकस्य कृते परमावश्यकः। स अध्यापनम् प्रकृतिस्थीकृत्य कस्यचिद् व्यापारस्य रूपेण तमाश्रयेत्।

तेन धर्मोपदेशकरूपेण सर्वदा जागरूपेण भाव्यम्। निर्लोभपूर्वकम् असौ सदा आत्मत्यागतत्परस्तिष्ठेत्।

**संस्कृताध्यापकानां गुणाः**

अध्यापकानां शिक्षायां महत्त्वपूर्णं स्थानं विराजते। शैक्षणिकप्रक्रियायाः प्रमुखसञ्चालकत्वेन अध्यापकः सर्वोच्चपदम् अलङ्करोति। स न केवलं स्वीयमौखिक-शब्दैः, अपितु रूचिभिः, अरूचिभिः आचारैः, विचारैः, आचरणैः अन्यमानवीयतत्त्वैश्च छात्रान् भृशं प्रभावयति।

छात्राः देशस्य भविष्यत्सम्प्रतिः। तस्य शारीरिक-मानसिकनैतिकादिसम्बद्धस्य सर्वाङ्गीणस्य विकासस्य दायित्वम् अध्यापकेष्वेव समाश्रितं तिष्ठति। स च तस्य दायित्वस्य निर्वाहं तदैव विधातुमर्हति यदा ते उपर्युक्तगुणाः तस्मिन् स्वयं पूर्वतो विराजमानाः स्युः। गुणसम्पन्नेपु शिक्षकेषु येषां वैशिष्ट्यानां सत्ता परमावश्यकी, तेषां वर्णनं तावदिह निम्नोक्त शीर्षकैर्विधीयते-

1. शारीरिकाः गुणाः।
2. मानसिकाः गुणाः।
3. नैतिकाः गुणाः।
4. वैयाक्तिकाः गुणाः चेति।

**(1) शारीरिकाः गुणाः-**

अधिकांशतः विदुषां मतेन एकस्मिन् शिक्षके अधोनिर्दिष्टाः शारीरिकाः गुणाः भवितव्याः-

**(क) शोभनं स्वास्थ्यम्-**

साधुशिक्षकस्य सर्वप्रथमो गुणस्तस्य शोभनं स्वास्थ्यम् साधुस्वास्थ्यशाली शिक्षकः एव स्वीयं कृत्यं सरलतया, सत्यतया सफलतया चानुष्ठातुमर्हते।

**(ख) स्फुर्तिः उत्साहश्च-**

एकस्मिन् शोभने शिक्षके स्वकार्ये सदा स्फूर्तिरूत्साहश्च तिष्ठति। छात्रास्तदीयान् इमान् गुणान् अनुकृत्य स्वकार्येषु प्रशंसनीयां समुन्नतिं विधातुं शक्नुवन्ति।

**(ग) वेश-भूषाः**

एकस्य शोभनस्य शिक्षकस्य वेशभूषामास्तु तथा-आकर्षिका, परं नयनाभिरामा अवश्यं भवति। धुमिलौ उपानहौ, मलिनं वसनं, लम्बमानाश्मश्रूः शिक्षकशरीरे दृश्यमानाः छात्रान् आक्रष्टुम् अप्रभवः सन्तः शिक्षकाणां कृते शिक्षण-साफल्यो बाधका भवन्ति। अतस्तैरस्मिन् क्षेत्रेऽपि सदा जागरूकैर्भाव्यम्।

**( घ ) स्वरः-**

रिस्केन प्रोक्तं यत्- ''स्वरः एकं शक्तिशाली साधनं विद्यते। अतः शोभनस्य शिक्षकस्य स्वरः कोमलः सुस्पष्टश्च भवति।

**( ङ ) व्यक्तित्वम्-**

पेन्टनस्य शंब्देषु व्यक्तित्वस्य सम्बन्धस्तेन प्रभावेण सह विद्यते यं शिक्षकः अपरेषु व्यक्तिषु समुपजनयति इति। पेन्टनमहाशयस्यानया उक्त्या इदं स्फुटं जायते यत् शोभनस्य शिक्षकस्य व्यक्तित्वं प्रभावशाली भवति।

**( च ) भाषा-**

शोभनस्य एकस्य शिक्षकस्य भाषा सरला, स्पष्टा, स्वाभाविका च भवति। छात्रेभ्यः एतादृशी भाषा भृशं रोचते। ते कठिनात् कठिनमपि पाठ सरलतया हृदयङ्गमीकुर्वन्ति।

**2. मानसिकाः गुणाः**

**( क ) विषयज्ञानम्-**

साधुः शिक्षकः स्वविषये सम्पूर्णज्ञानं संधारयति। स एतद् वस्तु स्फुटतया वेति यदसौ किं पाठयन्नस्ति। के. सी. सैय्यदेनेन सत्यमेवोक्तमस्ति-

''यदि शिक्षको ज्ञानदृष्ट्या हीनः रिक्तश्च, तदासौ बालकानां मस्तिष्कं प्रखरं विधातुं नैव शक्यते इति।''

**( ख )** शिक्षणसिद्धान्तानां, तद्विधीनाञ्च ज्ञानं साधुशिक्षणस्य प्रमुखः आधारः शिक्षण-सम्बन्धिनां सिद्धान्तानां विधिनां च ज्ञानं विद्यते।

**( ग ) मनोविज्ञानस्य ज्ञानम्-**

शोभनः अध्यापकः मनोविज्ञानस्य ताभिः शाखाभिः नूनं सुपरिचितो भवति, यासां शिक्षणविभागेन समं घनिष्ठः सम्बन्धो विद्यते यथा- शिक्षामनोविज्ञानं, बालमनोविज्ञानं, व्यावहारिकमनोविज्ञानम्, प्रयोगात्मकमनोविज्ञानमित्यादि।

**( घ ) बालप्रकृतिविज्ञानम्**

वर्तमानसमये शिक्षाप्रक्रियायां बालकस्य स्थानं केन्द्रीभूतम् अतः शिक्षकस्य कृते बालप्रकृतेर्ज्ञानं परमावश्यकम्। अपरेषु शब्देषु स बालकानामभिरुचिभिः, इच्छाभिः, आवश्यकताभिः च परिचितो भवेत्

**( ङ ) संस्कृतेः सभ्यतायाश्च ज्ञानम्**

शिक्षकस्य महत्वपूर्णमुद्देश्यं बालकेभ्यः तेषां संस्कृतेः सभ्यतायाश्च ज्ञानप्रदानं, तेषु आवश्यकं परिवर्त्तनं विधाय एकस्याः कुल शृङ्खलायाः अपरां कुलश्रृखलां प्रति हस्तान्तरणऽास्ति।

**द्धचत्रः वातावरणस्य ज्ञानम्**

टामसनस्य कथनमस्ति यत् ''वातावरणं'' शिक्षकोऽस्ति, शिक्षाकार्य च छात्रान् वातावरणानुकूलान् विधाति। इति

**( छ ) व्यक्तेः समाजस्य चावश्यकतायाः ज्ञानम्**

व्यक्तिः समाजश्चोन्योन्यपूरकौस्तः। व्यक्तिः समाजस्य, समाजश्च व्यक्तेरावश्यकताः पूरयति।

**3. नैतिकः गुणाः**

कस्मिश्चिंत् साधौ अध्यापके निम्नलिखिताः नैतिकाः गुणाः भवितुं शक्नुवन्ति।

**( क ) न्यायः निष्पक्षता च**

शोभने शिक्षके न्यायो निष्पक्षता चेमौ गुणौ अवश्यं विलसतः। स विविधानां वर्गाणां जातीनाञ्च छात्रेषु कमपि भेदभावं न बिभर्त्ति। एवमाचरणेन हि छात्रेषु अध्यापकानां प्रभावः समाप्तो जायते, ते च छात्राणां समादरस्य विश्वासस्य च पात्राणि न तिष्ठन्ति।

**( ख ) आत्मविश्वासः**

शोभने शिक्षके आत्मविश्वास इच्छाशक्ती नाम गुणाववश्यं विराजतः यदैव तादृशोऽध्यापकः कस्याश्चित् कक्षायाः छात्राणां समक्षं समुपस्थितौ भूत्वा तेषां दृष्टिपथमुपगतो भवति।

**( ग ) दया, सहानुभूतिश्च**

कश्चन शोभनः शिक्षकः छात्रान् प्रति दयां सहानुभूतिं च नूनं बिभर्त्ति। श्री पेन्टनस्य शब्देषु–''अस्य तात्पर्यं न कोमलता अपि तु छात्राणां दृष्टिकोणं, भावनां च विभावयितुं दुर्लभा योग्यता विलसति'' इति।

**( घ ) धैर्यस्थिरोत्साहश्च**

कश्चित् साधुरध्यापकः स्वीयेन धैर्येण स्थिरोत्साहेन चैव गुणेन स्वीयेषु सकलेषु काठिन्येषु विजयं समधिगन्तुं प्रभुर्जायेत।

**( ङ ) वैयक्तिकगुणाः**

कस्मिंश्चिद् शोभने अध्यापकं निम्ननिर्दिष्टाः वैयक्तिकाः सद्गुणाः सम्भवन्ति।

**उत्साहः आशावादिता च-**

**साधौ अध्यापके उत्साहः आशावादिता चेति गुणद्वयी नियतं विलसति।**

**( च ) विनोद-प्रियता-**

शोभनेऽध्यापके विनोदप्रियतागुणोऽपि छात्रेभ्यश्च अवश्यं विलसति। कक्षायाः नीरसतामपाकर्त्तुं स कामपि परिस्थितिं व्याजीकृत्य स्वयं हसति, छात्रेभ्यश्च हसनायावसरं प्रयच्छति।

# तत्त्वालोकदृष्ट्या क्षेत्रज्ञविवेचनम्

**स्वामी अनुभवानन्दगिरिः**

तत्त्वमस्यहं ब्रह्मास्मीत्यादिमहावाक्यात् ज्ञायते यत् ब्रह्मजीवयोः तादात्म्यमर्थात् जीवो ब्रह्मैव नापरः, अनयोरुभयार्थकत्वं प्रदर्शनात् लोके च पितृपुत्रयोः स्वामिसेवकयोः ब्राह्मणक्षत्रिययोः मूर्खपण्डितयोः धनीदरिद्रयोश्च भेददर्शनात् कथमभेदत्त्वं संगच्छते। एवं च क्षेत्रक्षेत्रज्ञयोः निरूपणावसरे क्षेत्रशब्देन प्रकृतिः क्षेत्रज्ञशब्देन च पुरुषः, अनयोः कथमभेद इति जिज्ञासावान् तत्त्वालोककारो धर्मदत्तो वदति- पुत्रः पिता स्वामी भृत्यो ब्राह्मणः क्षत्रियो मूर्ख पण्डितो दरिद्रो धनी त्वमयमहमित्याद्यखिलजनानुभवसिद्धभेदानां जीवानां सर्वेषामेकेन परमात्मनाऽभेदे तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन सर्वेषां जीवानां परस्परभेदापत्त्या भेदानुभवबाधापत्तिरित्यभेदः कथमुभयोः न कथञ्चिच्छ्रुतिश्चाभेद- प्रतिपादिकोपचरितार्था भविष्यतीत्यर्थः।

ब्रह्मजीवयोः कथमभेदत्वमिति प्रश्नस्य समाधानावसरे दीपिकाकारैः यदुक्तमविद्याकल्पितवशात् अर्थात् मायाकल्पितत्वेन ब्रह्मजीवयोर्भेद इति परिक्ष्यते। अद्वितीयब्रह्मज्ञानस्यैव दोषत्वस्वीकारात् अविद्याजन्यभ्रमरूपकल्पनावशात् आत्मान्तःकरणा- दिधर्मत्वात्। संसारस्य जन्ममरणसुखदुःखप्रबन्धस्य च भिन्नत्वमापद्यते। औपाधिकत्वात् उपाधिवशात्व्यवहारिकसत्तायाः प्राबल्याच्च अनयोर्भेदो वस्तुतः पारमार्थिकदृष्ट्या नास्ति कश्चन भेदः। पारमार्थिकभेदाभावात् ब्रह्मजीवयोरेक्यं तादात्म्यं च स्थापयन्ति वेदान्तिनः। तत्र श्रुतिरेव प्रमाणम्-

**'एको देवः सर्वभूतेषु गूढः, सर्वव्यापी सर्वभूतान्तरात्मा'[1]**
**'ममैवांशो जीवलोके जीवभूतः सनातनः'[2]**
**एको वशी निष्क्रियाणां बहूनामेकं बींज बहुधा यः करोति'[3]**
**'एको हंसो भुवनस्यास्य मध्ये स एवाग्निः सलिले संनिविष्टः'[4]**
**'सर्वं खल्विदं ब्रह्म'[5]**
**सर्वं ह्येतद् ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्'[6]**

---

1. श्वेता. उ.
2. गीता 15.7
3. श्वे. उ.
4. श्वे. उ.
5. छा. उ.
6. मा. उ.

**'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्'[1]**
**'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण।**
**अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्।।'[2]**

अभेदस्थापनावसरे स्वयं धर्मदत्तो निगदति- तथा च भिन्नतया कल्पितानामन्तः- करणादीनां भेदस्यैव तदुपाधिकेषु जीवेषु स्वानुभवगोचरत्ववत्संसारस्यापि तदुपाधिकस्यैव तेषु प्रतिभानाद्यावदज्ञानं व्यावहारिकजीवभेदस्थापित तेषां पारमार्थिकभेदविरहेण परस्पराभेदस्येष्टतया तदापादकत्वस्यैक-ब्रह्मात्मभेदेऽसंभवात्तदनुपपत्तिशंका न संभवतीति भावः। एकस्य जीवस्याविद्याकल्पित-त्वान्तःकरणाद्यौपाधिकसंसारित्वभेदः सिद्ध्यते। उपाध्युपधेयभावस्य भेदनियतत्वादन्यथोपाधीनां नानात्वमुपधेयस्य चैक्यमिति विरुद्धं भवेत्।

अतो भेदनीयं नियममभ्युपगत्य क्षेत्ररूपोपाधिक्षेत्रज्ञरूपोपधेयभेदं प्रदर्शयति भगवान् अस्मिन् त्रयोदशाऽध्याये। जीवान्तःकरणयोः पारमार्थिकभेदाभावेऽपि ब्रह्मण एकत्वादन्तः- करणादेरपारमार्थिकत्वात् पारमार्थिको न इति।

पारमार्थिकप्रतियोगिभेदस्य पारमार्थिके पारमार्थिके असत्वाद् पारमार्थिकप्रतिपादनं न युक्तं तथापि व्यवहारिकपक्षं समासृत्यौपाधिकजीवभेदग्रहानुकूलोपाध्युपधेयभेदस्य सापेक्षत्वादपरमार्थिजीवे ब्रह्मभेदो वर्तते इति न काचिदनुपपत्तिः तथाच-' **यद्यपि जीवान्तःकरणयोर्भेदो न पारमार्थिको ब्रह्मण एकस्यैव पारमार्थकत्वेनान्तः करणादेरप्यपरमार्थतया तत्प्रतियोगिभेदस्य पारमार्थिकत्वासंभवादित्य-पारमार्थिकप्रतिपादनं भवतो नोचितं तथापि व्यावहारिकौपाधिकजीवभेदग्रहौपयिकोपाध्यु-पधेयभेदस्य तादृशस्यैवापेक्षितत्वेनापारमार्थिकत्वेऽपित स्य न कापि क्षतिरिति बोध्यम्।'**[3]

क्षेत्रमिति अभिधीयते इत्यत्राभिधीयत इति कर्मणि प्रयोगेन क्षेत्रस्य जडत्वात् कर्मत्वं क्षेत्रज्ञशब्दे च द्वितीयां विना एव इति शब्दमाहरन् स्वप्रकाशत्वात् कर्मत्वाभावमभिप्रैति इति। मधुसूदनाचार्यैः यदुक्तं तस्य व्याख्यानप्रसङ्गे तत्त्वालोककारः 'क्षेत्रज्ञशब्दे च' इत्यस्य स्वार्थं विभक्त्यर्थं स्फुटयति यथा क्षेत्रज्ञशब्दे इत्यत्र या सप्तमी सौपश्लेषिकी तस्मात् क्षेत्रज्ञशब्दोपश्लिष्टमितिशब्दं स्वीकृत्य एव बोध्यं तं प्राहुरित्यत्र तच्छब्दात्क्षेत्रगोचराहन्वाद्यभिमानकर्तृत्वरूपेणापहितस्य ज्ञानकर्मत्वयोग्यस्योपस्थापकत्वात् यद्यपि तत्र कर्मत्वबोधकद्वितीयाप्रयोगः समुचितः तथापि तत्समानाधिकरणश्रोत्रशब्दात् द्वितीयं विना कर्मत्वबोधकस्याप्रासङ्गित्वात्। धात्वर्थज्ञानानुकूलव्यापारैकदेशज्ञानान्वय्यकरार्थकं क्षेत्रज्ञपदार्थे

1. ईशा. उ.
2. मु. उ
3. गू. तत्त्वालोक त्रयोदशोऽध्यायः पृ. सं. 141

प्रतिक्षेत्रमेकस्मिन्निर्विकारचिद्रूपे ज्ञानकर्मत्वस्य मुख्यार्थस्य चित्तादात्म्यरूपस्याभावात् बोधाभिप्रायेण द्वितीया प्रयोगः। प्रमाणमपि शिशुपालवधकाव्यस्य श्लोकम् उद्धृत्य प्रदर्शयति-

**चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।**
**विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥**[1]

एवं च **'क्रमादमुं नारद इत्यबोधी'**त्यस्य व्याख्याने इति शब्देन कर्मत्वाभिधानान्न द्वितीयेत्युक्तेरिति पदाभिधानेऽपि कर्मत्वप्रतिपत्तेरेवं तत्समानाधिकृत- तत्पदार्थस्य द्वितीयया कर्मत्वे बोधिते क्षेत्रज्ञपदार्थेऽपि तत्प्रतिपत्तेरसङ्गतिरिति निरस्तम्। क्षेत्रक्षेत्रज्ञयोर्ज्ञानमिति गीतावाक्यस्य व्याख्यानं करोति तत्त्वालोककारः क्षेत्रक्षेत्रज्ञयो इत्यत्र क्षेत्रस्य जडत्वेन क्षेत्रज्ञस्य चित्त्वेन ज्ञानमर्थात् अनयोर्भेदज्ञानवान् यो भवति स एव परमात्मनि अहमेव क्षेत्रपदार्थे चिदाकारस्य या प्रतीतिः सा अविज्ञामूला एवं च क्षेत्रज्ञपदार्थे निर्गुणस्य निर्विकारस्य या प्रतीतिः साऽपि उपाधिवशात् ज्ञायते। यतः अविद्यामूलम् इदं जगत् भवति। **'ब्रह्म सत्यं जगन्मिथ्या'** अविद्यावच्छिन्नोपहितचैतन्यं जीवो भवति उपाध्युपरागेणापाधिवत् नानात्वकल्पपनेति। वस्तुतः एकभूतस्य निर्विकारचित्तत्वस्य मुख्यकर्मत्वाभावेऽपि च अहन्त्वाभिमानाश्रयोपाधिकलुषितवशात् क्षेत्रमपि क्षेत्रज्ञस्य यत् भानं न तद् वास्तविकम् एदतिरिक्तं क्षेत्रं न इत्याकारकभेदविशिष्टं निर्गुणं निर्विकारं क्षेत्रज्ञमिति तत्त्वस्य ज्ञानमवश्यं विहितं तत्त्वालोककारैः तत्रेदमवधातव्यं बहुव्रीहिणाऽर्थलाभेऽपि तादृशार्थज्ञानाय **'असुप् वत्' 'नीलोत्पलवत्सरः'** इत्यादीनां व्याख्यानावरे महाभाष्यकारैः नागेशेन च कर्मधारयोत्तरं मतुप्प्रत्ययस्य विधानं कृतमनेन ज्ञायते अनुशासनं न सारवर्तिकम्। अतिशायने नित्ययोगे इत्यत्र तादृशार्थलाभाय मतुप्प्रत्ययस्य कर्मधारयोत्तरं विधानं गुरुमधुसूदनवचनं सयुक्तिकम् अत एव ब्रह्मणि त्वनादित्वमभावरूपं ब्रह्मस्वरूपं संबन्धोऽपि ब्रह्मस्वरूपो नित्य एवेति स प्रयोजनमूलकं गुरुवचनं तथाहि- कर्तव्यमिति ज्ञानिनो वदन्ति- **'अनादिमत्'** इत्यस्य व्युत्पत्तिके इत्थं भवति तत्त्वालोककारः **'अदिपदान्मतुपं विधाय पश्चान्नञ्समासे कृति आदिमन्नीवतीत्यनादिमदिति'**[2] अर्थात् आदेः अभावो अनादि इति नञादिपदस्य प्रथमं समासं विधाय मतुपि कृति सति कर्मधारयपदस्य बहुव्रीहितरसमासपरत्वात् बहुव्रीहीसमासेन तदर्थलाभसंभवे न कर्मधारयान् मत्वर्थीयो विधेयः।

**'न कर्मधारयान् मत्त्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः'** इति व्युत्पत्तिविरोधः। अत एव व्युत्पत्तिविरोधमूलकमनुशासनं स्वीकृत्य दीपिकाकारैः अनादीति। एतावतैव बहुव्रीहिणा अर्थलाभेऽपि अतिशायने नित्ययोगे वा मतुपः प्रयोगः इति। यदुक्तं तन्न समीचीनमत एव आदिपदात् मतुपं विधाय पश्चात् नञ्समासः।

**'यत्र यस्य प्रतियोगे व्यावहारिकं नहि तत्र तस्य व्यावहारिकत्वम्। ब्रह्मणि न प्रतियोगिव्यावहारिकमिति तादृशाभावस्य व्यावहारिकस्य सत्त्वं कार्ये प्रतियोग्यस्ति व्यावहारिकं**

1. शिशुपालवधम्
2. गीता गू. तत्त्वालोक पृ.सं. 142

**न तत्राभावस्तादृशस्सादृश्येन संबन्धेनेति भवत्यदोषः। एतेनानादिपदात्कृतनञ्तत्पुरुषान्मतुपः प्रागनुक्तत्वेन तस्येदानीं कल्पान्तरत्वेन तत्सूचकवाकाराद्यभिधानमुचितमेकस्य तवाकारस्यावृत्तिकरणं वानुचितमिति निरस्तम्। अथवा जीवाविद्याद्यनादय एव व्यावर्त्यास्तेषामनादित्वेन योगे सत्यपि न नित्ययोगस्तत्स्वरूपवदनादित्वतद्योगयोरपि कल्पिततत्वेन ब्रह्मज्ञाननिवर्त्यत्वात्। ब्रह्मणि त्वनादित्वमभावरूपं ब्रह्मस्वरूपं संबन्धोऽपि ब्रह्म स्वरूपो नित्य एवेति प्रयोजनवती गुरूक्तिरूचितैवेति भावः।'**[2]

वेदान्तिनां पृथिव्यादिवत् आकाशव्यक्तीनां जन्यानामनेकत्वात् आकाशत्वं जातिरेवेति आकाशव्यतिरिक्ता दिङ्कालतत्त्वान्तरं तत्त्वं नास्ति पुनः ईश्वरादतिरिच्यते इति यत् मधुसूदनाचार्यैः भाषितं तस्य व्याख्यानावसरे गूढार्थतत्वालोककारैः इत्थम् उच्यते- आकाशस्य क्लृप्तत्वात् तत्तदुपाध्यवच्छेदेन प्राच्यादिव्यवहारस्य उपपादनसंभवात् आकाशातिरिक्तं किमपि दिक्तत्त्वं नैव स्वीकार्यम् एवं च आकाशस्य श्रुतिसिद्धोत्पत्तिदर्शनात् तत्पूर्वकालव्यवहारविषय- त्वस्याऽऽकाशेऽसंभवादीश्वरस्यैव तद्विषयस्योपगन्तव्यतया ईश्वरातिरिक्तं कालतत्त्वं नाभ्युपेतव्यम्। यदि दिक्कालयोः आकाशातिरिक्तत्वसत् साध्यते तज्जिज्ञासायामुच्यते। उपाधिविशेषप्रवृत्तिनिमित्तात् अनयोः तत्त्वालोककारः- क्लृप्ते विनिगमना- विरहात्कमप्यन्यत्सिध्यतीतिन्यायेन दिक्कालयोरतिरिक्तयोरेवाभ्युपेयत्वात्। तथाहि दिग्व्यवहारविषय- त्वस्याकाशे परमेश्वरे मायायां वा विनिगमनाविरहेण कल्पने लाघवादतिरिक्तदिशस्तद्व्यवहारविषयतया सिद्धिरेवं कालेऽपि परापरत्वासमवायिकारणसंयोगकारणत्वेऽपि विनिगमनाविरहेणानेककारणतायां गौरवेण लाघवादेककारणत्वस्योपेयतया तादृशसंयोगाश्रयतयापि दिगादिसिद्धिरिति।

**'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि'** इत्यादि श्लोकस्य व्याख्यानावसरे प्रकृतिर्मायाख्या त्रिगुणात्मिका पारमेश्वरी शक्तिः क्षेत्रलक्षणा या सा प्रकृतिः तस्याः प्रकृतेः अनादित्वात् सर्वजगत्कारणत्वं सिद्ध्येत् इति सांख्या वदन्ति।

जगतः कारणत्वात् प्रकृतेः अनादित्वं प्रकृतेः कारणसापेक्षत्वेऽनवस्थाप्रसङ्गात्। उक्तं च मधुसूदनाचार्यैः **'तस्या अपि कारणसापेक्षत्वेऽनवस्थाप्रसङ्गात्'**[2] अस्याः पङ्क्तेः व्याख्यानावसरे बच्चाझा इत्थं निगदति- अनादिरेवैकस्य कारणत्वे तस्य पूर्वपूर्वकाले सत्तया कार्यत्वेनाभिमतस्यापि पूर्वपूर्वसत्त्वापत्यानादित्वम् अकार्यत्वं च भवेत्। आगन्तुकस्य कारणकोटिप्रवेशे सति तस्याप्यन्यत्कारणं वक्तव्यम्। यस्य कारणत्वं कल्प्यते तस्याऽपि कारणान्तरं वक्तव्यमिति चेत् अनवस्था। **'अप्रामाणिककल्पनासमाप्त्यभावः अनवस्था।'**[3] तत्रेदमवगन्तव्यम् अनादित्वस्य कारणत्वकल्पे या

---

1. गीता गू. तत्त्वालोक पृ. सं. 142
2. गीता गू. दी.
3. न्यायसि. मु. कि. टीका( जातिबाधकप्रकरणम्)

अनवस्थाः प्रदर्शिता सा अनवस्था न दोषाधायिका यतः बीजाङ्कुरप्रवाहवदनादित्वाज्जीवाश्रिताविद्योपगन्तृणां भामतिकाराणां वाचस्पतिमिश्राणां जीवाविद्ययोरन्योन्याश्रयस्य वारणं बीजाङ्कुरप्रवाहवदनादिप्रवाहत्वेनैव संभवतीति तेषां नये अविद्याया अनादित्वमपि प्रवाहानादित्वम्। यदि च उक्तानवस्था दोषाधायिका भवेत् तर्हि अनादेरेकस्याः मायाया अनादेः क्षेत्रस्य च कारणत्वेऽपि अनादित्वेन कार्यत्वेनाभिमतस्य कार्यस्य पूर्वपूर्वमुत्पत्त्यापत्त्याऽनादित्वमकार्यत्वं च स्यादिति तद्वारणाय यदि आगन्तुकानां दृष्टादेः कारणत्वस्वीकारे आगन्तुकसिद्ध्यर्थं तं प्रत्यागन्तुकस्य तादृशमागन्तुकं प्रति पुनः आगन्तुकस्य कारणत्वकल्पनया अनवस्थापत्तिः अत एव मायावशात् ब्रह्म जगन्निर्माणं करोति। अनादिरूपायाः मायायाः एककारणत्वं लाघवात् कल्पनायामिति वाचस्पतिमिश्राणामाशयं स्फुटयति तत्त्वालोकः ग्रन्थावलोकनात्। अविद्यायाः कल्पितत्वेऽपि यथाऽनादित्वनिर्वाहस्तथोक्तदृष्टिसृष्टिवादेः अविद्यायाः किमुपादानमित्यस्यापि नावकाशः।

आकाशस्य उपाधिविशिष्टत्वेन तत्त्वस्येश्वराङ्गिकर्तृत्वेन कालस्य च तत्त्वानन्तरं नास्तीति ये वदन्ति, तत्र के ते उपाधयः कश्च तैः सह सम्बन्धः इत्यत्र सन्ति वेदान्तिनां मतभेदाः तथाहि **'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'**[2] मिति श्रुतौ श्रुतानिर्वचनीयविचित्रानेकशक्तिमत्तया मायापदप्रतिपाद्या अत एव सांख्याभिमतप्रकृतेर्विलक्षणं जगत्। प्रकृतिर्महेश्वरपदलक्ष्यशुद्धचेतनाश्रितैका प्रतिबिम्बभूतस्येश्वरस्य प्रतिबिम्बनकृत्स्नोपाधिस्तत्तद्विक्षेपावरणरूपानन्तशक्तिमत्त्वेन कल्पितानन्तप्रदेशभेदवती प्रतिबिम्बनोपाधिनां गतापरिच्छिन्ना जीवोपाधिस्तेषु तेषु प्रदेशेष्वविद्याभिधानेषु प्रतिबिम्बास्ते ते जीवा उपाधेरनादित्वात्परिच्छिन्नत्वाच्चानादयः परिच्छिन्नाश्च सर्वत्र प्रसिद्धोपदेशादित्यधिकरणभाष्ये द्युभ्वाद्यधिकरणभाष्ये च जीवस्य शरीर एव प्रतिलम्भस्याविभुत्वस्य च प्रतिपादनादित्येकं मतम्। **'जीवेशावाभासेन करोति माया चाविद्य च स्वयमेव भवती'**[2] ति श्रुतौ त्रिगुणायाः मूलप्रकृतेर्द्वौ भेदावुक्तौ तत्र शुद्धसत्त्वप्रधाना माया परमेश्वरोपाधिः प्रतिबिम्बने मलिनसत्त्वप्रधानाऽविद्या जीवप्रतिबिम्बनोपाधिरूपाधेर्विशुद्धमलिनत्वाभ्यामीश्वरजीवयोः सर्वज्ञत्वाल्पज्ञत्व इति कस्यचिन्मतम्। विक्षेपशक्तिप्रधाना मायेश्वरोपाधिरत एव स सर्वजगत्कत्रावरणशक्त्यप्राधान्यात्सर्वज्ञः। आवरणशक्ति-प्रधानाऽविद्या जीवोपाधिरत एव जीवोऽज्ञः।

विक्षेपशक्त्यप्रधान्यात्कस्यचित्प्रातिभासिकादेरेव स्रष्टेत्यपि कस्यचिन्मतम्। मतेष्वेतेषु प्रकृतेरेकस्या एव शक्त्यपरिच्छिन्नत्वपरिच्छिन्नत्वाभ्यां शुद्धमलिनसत्त्वप्राधानाभ्यां विक्षेपावरणशक्तिप्राधान्याभ्यां वा काल्पनिको भेदो व्यावहारिकोऽपि तथैव श्रुत्या स्वयमेव भवतीत्यभेदप्रतिपादनात्। न चोपाधिभेदं विनैकस्य प्रतिबिम्बभेदसंभव इत्यतः **'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर'** इति श्रुत्यनुसारादविद्यैका कारणमीश्वरोपाधिरन्तःकरणानि कार्याणि जीवोपाधिरूपाण्यविद्यान्तःकरणयोरुपाध्योः प्रतिबिम्बरूपावीश्वरजीवौ

---

1. गीता गू. तत्त्वालोकः पृ.सं. 143
2. गीता गू. तत्त्वालोकः पृ.सं. 143

श्रुतावस्मिन्तयोरुपाधित्वस्य कण्ठत एवोक्ते **'जीवेशावभावसेन करोती'**[1] त्यत्र जीवेशयोः प्रतिबिम्बत्वमात्रप्रतीतेर्मायाविद्ययोरुपाधित्वाप्रतीतेरविद्याशब्देनान्तःकरणस्यैवोक्तत्वात्तस्यैवाज्ञत्वप्रयोजकत्वात्तत्कार्यस्य तस्य. तदभेदस्यापि संभवात्।

न चान्तःकरणस्य कार्यतया सादित्वाज्जीवेऽपि सादिरेव स्यात्तया चाकृताभ्यागमप्रसङ्गो वासनाद्यभावेन स्तनपानादिप्रवृत्त्यभावप्रसङ्गश्चेति वाच्यम्। संसारस्यानादितया एव स्वीकारेणादृष्टानां जातविपाकानां भोगेन क्षये स्थितानां विजाककालाप्राप्तावुपस्थिते प्रलयेऽन्तः करणान्यदृष्टवासनासहितानि स्थूलरूपतामपहाय सूक्ष्मरूपेण संस्कारापराभिधानेन स्वकारणे प्रलीयनिर्मृष्टचित्रकल्पान्यवतिष्ठन्ते। पुनः प्रलयावधौ पूर्णे **'विपाकाभिमुखेष्वदृष्टेषु'**[2] स्थूलरूपतां प्रतिपद्यन्ते एवं तत्पूर्वसर्गे तत्पूर्वसर्गे चेति नोक्तदोषस्य ह्यस्त्यवकाशः। सूक्ष्मरूपतापत्तिरेव हि विनाशो न बाधकात्तत्त्वज्ञानात्प्राङ्निरन्वयो विनाशः स्थूलरूपतापत्तिरेव तस्य कार्यत्वं तादृशावस्थमेव च तत्परिमाणतया व्यपदिश्यते। सूक्ष्मावस्थागतान्यप्यदृष्टान्येव विपाककाले प्राप्ते स्वफलोपभोगसाधनस्यान्तःकरणादेः स्थूलरूपतापत्तौ तत्कारणस्य परिणामिनो विवर्तमानस्य च निमित्तस्य चेश्वरस्य सहकारितामापद्यन्ते। अन्तःकरणोपादानानां साक्षादज्ञानं वा मिलितापञ्चीकृतभूतसात्त्विकांशो वेत्यन्यदेतदिति संक्षेपशारीरकमतम्। एषु च प्रतिबिम्बपक्षेषु यथा **'स्वयञ्ज्योतिरात्मा-विवस्वानपो भिन्ना बहुधैकोऽनुगच्छत्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मे'**[3] ति। **'अत एव चोपमा सूर्यकादिवदि'** ति सूत्रमपि प्रमाणम्। चित्रदीपे च **प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यती**'ति श्रुतौ देहादिसंघातरूपेण परिणतेभ्यो भूतेभ्यो उपाधिरूपेभ्यः समुत्थानं तत्साम्येन तदुत्पत्त्योत्पादोऽनुविनाशस्तन्नाशेन नाशः प्रज्ञानघनरूपप्रतिपादितः।

**॥श्रीहरिः॥**

---

1. गीता गू. तत्त्वालोकः पृ.सं. 144
2. गीता गू. तत्त्वालोकः पृ.सं. 143
3. गीता गू. तत्त्वालोकः पृ.सं. 144

# पण्डितराजजगन्नाथस्य व्यक्तिपरिचयः

**श्रीराजेशबतरा**

संस्कृतसाहित्याकाशे देदीप्यमाननक्षत्रमण्डलेषु शरत्कालीनप्रभापुञ्जवत् काव्यशास्त्रोत्तरवर्ति-युगस्यान्तिमप्रतिभायाः च दर्शनं पण्डितराजजगन्नाथरूपेण भवति। प. जगन्नाथः सर्वशास्त्रज्ञः, मौलिकचिन्तनालोचनसूक्ष्मसमीक्षकश्च, येन संस्कृतकाव्यशास्त्रेभ्यः नूतनं दिग्दर्शनं कृतम्। अस्य मौलिककाव्यस्य सर्जनात्मकता, पक्षविपक्षसिद्धान्तप्रतिपादनकौशलम्, सूक्ष्मतत्त्वान्वेषिणी दूरदर्शिता, विविधरसानां परिपाकेन ललितकाव्यस्य प्रतिपादकता, भावानां नूतनाभिव्यञ्जकता च विशिष्टा एव।

काव्यस्य परिभाषायाः रसभावादीनां विवेचनापर्यन्तं नैयायिकशैल्यां तथा च भावाभिव्यक्तिवैचित्र्यात् प्रतिपादनक्षमता विशिष्टस्थानं लक्षयति। एतैः गुणैः पं. जगन्नाथस्य स्थानं व्यक्तित्वं जीवनपरिचयञ्च विदुषां पुरस्तात् सर्वदैव जिज्ञासाया विषयं प्रस्तुवन्ति।

पण्डितराजजगन्नाथस्य जन्म तैलङ्गब्राह्मणपरिवारेऽभवत्[1], जात्या तस्योपनाम वेङ्गिनाडुवेल-नाडुरिति वा प्रसिद्धमासीत्[2]। पेरुभट्टः जनकः, जननीश्चास्य लक्ष्मीरिति[3]। रसगङ्गाधरस्य 'सर्वविद्याधर'पदेन इदं स्पष्टं प्रतिभाति यत् अस्य पिता पेरुभट्टः सकलशास्त्रनिष्णातः, सर्वविद्यापारगः च आसीत्।[4] अनेन वेदान्तशास्त्रस्य ज्ञानं ज्ञानेन्द्रभिक्षोः, न्यायवैशेषिकयोः महेन्द्रपण्डितात्, पूर्वमीमांसायाः

---

1 (क) 'तैलङ्गान्वयमङ्गलालयमहालक्ष्मीदयालालितः' (प्राणाभरणम्, जगदाभरणम्, श्लोक, 53)
(ख) 'तैलङ्गकुलावतंसेन पण्डितराजजगन्नाथेन' (आसफविलासान्ते अन्तिम् पद्यांशः)

2 (क) श्रीतैलङ्गवेङ्गिनाटीय कुलोद्भव श्री पण्डितराजजगन्नाथविरचिता (आ. वि. समापिका पङ्क्ति)
(ख) तैलङ्गवेलनाटीयद्विजजगन्नाथतिरश्शूलधर 'संग्रामसारः' 1/5
(उद्धृत हिन्दी रसगङ्गाधर, चतुर्वेदी, भूमिका, पृ. ढ़)

3 (क) 'तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम्' (रसगङ्गाधर 1/3)
(ख) तैलङ्गान्वयमङ्गलालय महालक्ष्मी दयाललितः।
श्रीमत्पेरमभट्टसूनुरनिशं विद्वल्ललाटं तपः।। (प्राणाभरणम्, पद्यम् 53)

4 श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः,
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत्।
देवादेवाध्यगीष्टस्मरहरनगरे शासनं जैमिनीयं
शेषाङ्क प्राप्तशेषामलभणितिरभूत सर्वविद्याधरो यः।। (रसगङ्गाधरः, प्र. आ. श्लोक 2)

खण्डदेवोपाध्यायात्, व्याकरणमहाभाष्यस्य च शेषवीरेश्वरात् शेषश्रीकृष्णात् वा प्राप्तम्।[1] पण्डितराजोऽयं स्वविदुष: पितु: पेरमभट्टात् गुरो: शेषवीरेश्वरात् च सकलशास्त्रणाणि अधीतवान्।

साहित्यशास्त्रीयचिन्तनधारायां प्रखरपाण्डित्यस्य धनिक: पण्डितराजजगन्नाथस्य व्यक्तित्व: कृतयश्च विशिष्टा: सन्ति। अलौकिकप्रतिभावान् अयं स्वतंत्रविचारक: समालोचकश्चासीत्। काव्यशास्त्रीयग्रन्थानां प्रणयनात् व्याकरणशास्त्रस्यालोचनात्मकग्रन्थेष्वपि तस्या लेखनी मतिश्च समरूपेण धावत: स्म। तेन संस्कृतकाव्यशास्त्रे नवीनालङ्कारिकार्थव्यक्ते: वैचित्र्यरूपेण प्रस्तुतायां कवितायां च माधुर्यच्छटा विस्तारिता। अत्र पण्डितराजस्य व्यक्तेरुपरि केचन बिन्दव: प्रस्तूयन्ते -

**1. स्वाभिमानी स्पष्टवक्ता च** -यद्यपि बहुभि: विद्वद्भि: पण्डितराजस्य स्वभाविकोग्रता प्रकटिता तथापि स अतीव सरल:, विनीत:, कोमलहृदययुक्तश्चासीत्। सत्यभाषणे निर्भय: स्वगर्वयुक्त: आसीत्। यस्य प्रमाणं तस्य ग्रन्थेषु द्रष्टुं शक्यते तस्मिन् समये नैव एतादृश: कोऽपि कविरासीत् य: पण्डितराजजगन्नाथेन सह समतास्थापने समर्थ: स्यात्। एतदेव तदुक्त्या यत् -

**इदानीं लोकेऽस्मिन्ननुपम शिखानां पुनरयं**
**नखानां पाण्डित्यं प्रकटयतु कस्मिन् मशगपति:॥**

(प्रस्ताविकविलास 1)

एकदा केनापि पण्डितराजाय कविता श्रावयितुमिच्छा प्रकटिता तदा पण्डितेन कथितम् -मित्रं यदि भवान् परिपक्वत्वात् मधो: मधुरतां खर्वां करिष्यति तदा सुखेन कवितां श्रावयतु, यदि भवत: वाणी मर्मज्ञा नास्ति तदा स्वकृतपापाचरणेन स्वहृदयात् कवितां बहिर्मा निस्सारयतु।

तदेवम् -

**निर्माणे यदि मार्मिकोऽसि नितरामत्यन्तपाकद्रवन्-**
**मृद्वीकामधुमाधुरीमदपरीहारोद्धुराणां गिराम्।**
**काव्यं तर्हि सखे सुखेन कथय त्वं सम्मुखे मादृशां**
**नो चेद् दुष्कृतमात्मना कृतमिव स्वान्ताद् बहिर्मा कृथा:॥**

(शा. वि. 30)

पण्डितराजस्य गर्वोक्तय: संस्कृतसमाजे अतीव प्रसिद्धा: सन्ति। समालोचकानां कथनं वर्तते यत् विधात्रा तस्य स्वभाव: पूर्णरूपेण अभिमानेन पोषित:। तेन स्वयमेव स्वात्मनिरूपणं पद्येनानेन कृतम्-सुमेरुपर्वतात् मलयाचलं यावत् समुद्रेण युक्त्या पृथिव्यां नास्ति एतादृश: विद्वान् यस्तादृश:

1 श्रीमज्ज्ञानेन्द्रभिक्षो ................ सर्वविद्याधरो य:। (तत्रैव)

काव्यमर्मज्ञो वर्तते। ये विद्वांसः सन्ति ते कथयन्तु यत् मत्तः पृथक् द्राक्षाद्रवद्रवितमधुरवाणीयुक्तः आचार्यः को भवितुं शक्नोति।[1] स्वासाधारणप्रतिभाया तुलना तेन कस्तूरीमश्गेण सह कृता रसगङ्गाधरस्य प्रथमानने तस्य कथनमस्ति यत् अस्य ग्रन्थस्य सर्वाण्युदाहरणानि तस्य स्वस्य एव सन्ति, तेन कस्यापि अपरस्योदाहरणं स्वग्रन्थे नैव प्रस्तुतम्। यतोहि किमु मश्गेण मनसापि साधारणपुष्पगन्धस्य सेवनं क्रियते।[2] अस्याः कवितायाः आनन्द येन न लभ्यते स 'जीवितोऽपि मृतः' अस्ति -

**ध्रुवं ते जीवन्तोऽप्यहह मृतका मन्दमतयो**
**न येषामानन्दं जनयति जगन्नाथभणितिः॥**

पण्डितराजः स्वपाण्डितस्योपरि अत्यधिकरूपेण गर्वान्वित आसीत्। स च आत्मनः गणना श्रेष्ठपण्डितानां मस्तकेषु तिलकरूपेण करोति स्म। तेन स्वस्य सर्वशास्त्रज्ञता, लोकस्यातिशयिता च गर्वेण द्योतितः।[3] तथा च 'मननतरितीर्णविद्यार्णवः' 'जगन्नाथपण्डितनरेन्द्रः' इत्यादिभिः विशेषणैः आत्माऽलङ्कृतम्। तस्मिन् आत्मश्लाघयाः भावनापि एवमेव समाविष्टा नासीत्, स्वयं वाग्देव्या स्ववाण्या मन्दझङ्कृत्या तस्य श्रवणरमणीयवाण्या रसपानं क्रियते। तथा च पण्डितराजस्य पद्येन यः मन्त्रमुग्धो नाभूत् स नरोऽपि पशुवत् एव वर्तते।

पण्डितराजः स्पष्टवक्ता आसीत् सत्य तु सत्यमेवाऽस्ति, किमु तत् कटु स्यात्। तस्य कटुत्वात् तीक्ष्णशरैः प्रतिष्ठिता विद्वांसोऽपि सुरक्षितः नासन्। स पाण्डित्यप्रदर्शनं दोषाय नैव करोति स्म अपितु तस्य दृष्टिः एव सूक्ष्मतत्वान्वेषिणी आसीत्। अतः कोऽपि दोषः तस्य बुद्ध्या अलक्षितः नास्ति। अनेन प्रकारेण वयं पश्यामः यत् पण्डितराजस्य व्यक्तिः एवं यत् स स्पष्टवक्ता, तीक्ष्णालोचकः, स्वाभिमानी, आत्मश्लाघा वा दृश्यते। प्रस्ताविकविलासे बहूक्तयः पण्डितराजस्य जीवनस्य यथार्थानुभवमभिव्यक्तं कर्तुं दृश्यते। तेन बहूनां नृपाणामाश्रयत्वं प्राप्तमासीत्, सम्मानमपि लब्धम्, तस्य पाण्डित्यस्य प्रशंसा विद्वद्गोष्ठीषु भवति स्म। तथापि तस्य कवितायाः आस्वादनमप्सरसः अधरमिव माधुरीवाग्विलासस्य केन्द्रमधिगन्तुं कोऽपि समर्थः नैवासीत्।[4] अस्मिन् विषये तस्य गर्वोक्तयः आभूषणानि न तु दूषणानि। स्वयं पण्डितराजेनोक्तम्-

---

1 निर्माय नूतनमुदाहरणानुरूपं
काव्यं मयात्र निहितं न परस्य किञ्चित्।
किं सेव्यते सुमनसां मनसापि गन्धः
कस्तूरिका जननशक्तिभृता मृगेण॥ रसगङ्गाधर प्र. आ. पद्य 6

2 सर्वपण्डितराजराजितिलकेनाकारि लोकाधिकम्॥ शा. वि. पद्य 32

3 गिरां देवी वीणागुणरणनहीनादरकरा यदीयानां वाचाममृतमयमाचामतिरसम्।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते रघुन्वन् मूर्धानं नृपशुरथवायं पशुपतिः॥ शा. वि. पद्य 27

4 आस्यं धास्यति कस्य लास्यमधुना धन्यस्यकामालस-
स्वर्वामाधरमाधुरीमधरयन् वाचां विलासो मम्॥ प्राणा./जगदा. पद्य 1

विश्वाभिरामगुणगौरवगुम्फितानांद्व
रोषोऽपि निर्मलधियां रमणीय एव।
लोकम्पशणैः परिमलैः परिपूरितस्य
काश्मीरजस्य कटुतापि नितान्तरम्या।।[1]

## 2. काव्यशास्त्रस्य व्याकरणशास्त्रस्य च विद्वान्

पण्डितराजस्य स्थानं न केवलं काव्यशास्त्रेऽपितु व्याकरणशास्त्रेऽपि महत्त्वपूर्णमस्ति। रसगङ्गाधरेण पण्डितराजस्य स्थानं काव्यशास्त्रपरम्परायां प्रथमाचार्यस्य स्थापितम्। काव्यशास्त्रस्य सिद्धान्तानां, लक्षणानां, कारणानां, काव्यभेदानां, गुणानां, रसभावस्य भेदानां, ध्वन्यादिशब्दशक्तीनाम्, अलङ्काराणां वर्णनं यथा सूक्ष्मत्वञ्च मौलिकं तेन रसगङ्गाधरे संस्कृतकाव्यशास्त्रेतिहासे अमरकृतेः स्थानं लब्धम्।

आचार्यमम्मटानन्दवर्धनयो ग्रन्थानामप्युल्लेखः तस्मिन् ग्रन्थे दृश्यते। काव्यशास्त्रिणां सिद्धान्तानामुल्लेखोऽपि वर्तते। तेषां काव्यशास्त्राणि अस्य निर्भीकदृट्या परिशीलितानि। अयमेव तस्य व्यक्तेः विशेषम्। अनेन वीररसस्य निरूपणप्रसङ्गे काव्यप्रकाशस्य सारबोधिनीटीकायां श्रीवत्सलाञ्छलेन दानवीरस्य रसध्वनेरुदाहरणं यत् प्रदत्तमासीत् तद् समीक्षापूर्वकभावध्वनेरुदाहरणरूपेण प्रस्तुतम्।[1]

पण्डितराजस्य व्यक्तिपरिचायकं तस्य व्याकरणज्ञानमपि वर्तते। तस्मात्तेन मनोरमाकुचमर्दनम्। शब्दकौस्तुभशाणोत्तेजनयोः रचना कृता। यत्र पण्डितराजेन व्याकरणशास्त्रविदुषः भट्टोजिदीक्षितस्य व्याकरणसिद्धान्तानां खण्डनं कृतं स्वस्य सिद्धान्तः च स्थापितः। रसगङ्गाधरेऽपि व्याकरणात्मकपद्यानां दर्शनं भवति। अनेन प्रकारेण पण्डितराजेन काव्यशास्त्रस्य सिद्धान्तानां तथा च व्याकरणसिद्धान्तानां व्याख्या या प्रौढान्तरिकसूक्ष्मरूपेण कृता या तस्य व्यक्तेः वैशिष्ट्यं प्रतिपादयति।

## परम्परायाः मौलिकप्रवृत्तेश्चोद्भावकः

भारतीयसंस्कृतकाव्यशास्त्रस्येतिहासे पण्डितजगन्नाथस्य व्यक्तिः उन्मुक्ता, परम्परायाः संवाहिका नूतनप्रवृत्तीनामुद्भावयित्री दृश्यते। तस्य लेखिन्याः स्पर्शमात्रेण प्राचीनसिद्धान्तेष्वपि नूतनायाः मण्डनं परिलक्ष्यते। तेन प्रतिपादितस्य काव्यशास्त्रलक्षणस्य विषये मौलिकताया सजीवोदाहरणम्- 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' प्रस्तुतम्। यस्मिंल्लक्षणे वामनस्य सौन्दर्यं, दण्डिनः इष्टार्थः, आनन्दवर्धनस्य 'लोकोत्तराह्लादः' तेन समाविष्टः। रसविवेचनेन सह भावविवेचनेऽपि भावानां शरीरस्यापेक्षया चित्तवृत्त्यपरपर्यायत्वेन ब्रह्मस्वादसहोदरस्य प्रतीतिः प्रामुख्येन प्रस्तुता। शब्दशक्तीनां निरूपणं स्यात् उत वा अलङ्कारविवेचनं सर्वत्र मौलिकतापूर्वरसस्य पाकः नैयायिकदृष्टिकोणस्य तस्य व्यक्तौ सौन्दर्यमेव पुष्णाति।

---

1. 79 अ
2. रसगङ्गाधर, प्र. आ. पृ. 169-70

नूतनकाव्यशास्त्रस्य सिद्धान्तानां स्थापनां कुर्वता पण्डितजगन्नाथेन मौलिकप्रवृत्तीनामुद्भावना प्राचीनपरम्परायाः मर्यादा च अक्षुण्णतया संस्थापिता। रसस्य विस्तरप्रवृत्तेः खण्डनं कृत्वा परम्परायाः पुनः प्रतिष्ठायां दृढमुक्तम् – "रसानां नवत्वगणना च मुनिवचन-नियन्त्रिता भज्येत", इति यथा शास्त्रमेव ज्यायः। अर्थात् भक्तिवात्सल्यादिरसानां समावेशनात् भरतमुनिना निर्धारितस्य संख्यकस्य क्रमभङ्गस्य स्थितिभूतत्वात् शास्त्रस्यानुकरणमेव (नाट्यशास्त्रानुकरण) श्रेयस्करम्। अनेन प्रकारेण जगन्नाथस्य श्रद्धेयानां विषये विनम्रतायाः दर्शनं भवति। यच्च तस्य व्यक्तेः विशालतां प्रकटयति। स्वग्रन्थे प्राकृतपद्यानां संस्कृतभाषायां वर्णनेन प्राकृतभाषां प्रति नूतना दृष्टिः प्रदत्ता। भक्तिनीति इत्यनयोः तुलसीदास, सूरदास, बिहारीकवीनां ब्रजभाषानिबद्धपद्यानां संस्कृतानुवादेन स्वग्रन्थे प्रस्तुतेन च तस्य व्यक्तेः पाण्डित्यस्य च दर्शनं भवत्येव।

**सहृदयरससिद्धकविः**

पण्डितराजः स्पष्टवक्ताऽपि सहृदयः, तस्य लेखिन्या तश्णात् ब्रह्माण्डपर्यन्तं नावशिष्टं किमपि तत्वम्। तस्य लेखिन्याः स्पर्शमात्रेणैव जडं चेतनवत् रसवच्च विजायते। करुण शृङ्गारशान्तादिसर्वरसानां परिपाकः तस्य काव्ये विद्यते एव। आचार्यमम्मटस्य रसविषयकानां सिद्धान्तानां उल्लेखः कृतः किन्तु पण्डितराजेन एकादशसिद्धान्तानां उल्लेखः कृतः। अभिनवगुप्तस्य मतस्य व्याख्यापि कृता। रसस्य स्वरूपस्य परिचयः रसगङ्गाधरस्य अध्ययनेन एव भवति। शृङ्गाररसवत् वीरस्यापि भेदाः भवितुं शक्यन्ते तस्मादनेन क्षमावीरः, सत्यवीरः, पाण्डित्यवीरः, बलवीरश्च चत्वारः भेदाः तेन प्रतिपादिताः। प्राचीन अलङ्कारिकाः गुणानां स्थितिः रसधर्मत्वेन स्वीकुर्वन्ति। परञ्च पण्डितराजेन गुणानां स्थितिः शब्दार्थरसरचनानां धर्मत्वेन स्वीकृता। रसस्य विवेचने भावानामपि महत्त्वं प्रदर्शितम् तथा च ब्रह्मास्वादसहोदरत्वेनोल्लेखितम्।

**आस्तिकवैष्णवभक्तश्च**

पण्डितराजेनास्तिकतायाः विषयः संस्कारेण एव लब्धः। तस्य पिता सर्वेषु शास्त्रेषु निष्णातः माता च वल्लभसम्प्रदायसम्बद्धा आसीत्। पण्डितराजः वैष्णवश्च। तेन प्रायः सर्वेषां देवानां स्तुतिमङ्गलरूपेण कृता स्थाने-स्थाने। स भगवत्कृष्णस्य भवत्याः गङ्गायाश्चानन्य भक्तः आसीत्। तेन च भगवत्कृष्णस्य विष्णोः, भगवत्याः लक्ष्म्याः, भागीरथ्याः गङ्गायाः, यमुनायाः, सूर्यस्य शिवस्य च स्तुतिः कृता। स्तोत्रकाव्येषु सुधालहरी, लक्ष्मीलहरी, अमृतलहरी, करुणालहरी, पीयूषलहरी च रचिताः। डॉ. कलानाथशास्त्रिणः मतमस्ति यत् लहरीकाव्यस्य रचना तेन शङ्कराचार्यस्य 'सौन्दर्यलहरी' काव्यप्रभावेन कृता।[1]

पण्डितराजजगन्नाथः प्रकृतेरुपासकोऽपि आसीत्। प्रकृतेः पञ्चतत्वेषु पञ्चमहाभूतेषु वा यानि

1 द वर्क्स आफ पण्डितराज जगन्नाथ पॉइट्री, कलानाथशास्त्री, पृ. 21

तत्वानि तेषां (पृथ्वी, अग्निः, जल, वायुः, आकाशश्च) सर्वेषां तत्त्वानां स्तुतिः पण्डितवर्येण कृता। पण्डितराजस्य ईश्वरं प्रति श्रद्धाविश्वासानामागारः आसीत् हृदये। यथा –

**भवानलज्वालविलुप्तचेतनः शरण्य तेऽङ्घ्रिशरणं भयादयाम्।**
**विभाव्य भूयोऽपि दयासुधाम्बुधे विधेहि मे नाथ यथा यथेच्छसि॥[1]**

आत्मानं पतितमुक्त्वा, भयसंत्रस्तः, शरणार्थी, निर्बोधः, बालकः, असहायः, वैराग्यभावेन स्वाराध्यस्य भगवत्पादस्य स्तुतिं करोति –

**'पतितोऽप्यतिदुर्गतोऽपि सन्नकृतज्ञतो निखिलागसां पदम्।**
**भवदीय इतीरयंस्त्वया दयनीयस्त्रपयैव केवलम्॥[2]**

तस्य स्तुतिरप्युपालम्भोऽपि–

**अयिदीनतरं दयानिधे दुःखस्थं सकलैः समुज्झितम्।**
**अधुनापि न मां निभालयन् भजसे हा कथमश्मचित्तताम्॥[3]**

तस्य मुख्याराध्यत्वेन भगवत्कृष्णः एव यतो हि स्वेष्टदेवेषु तेन द्विधा स्तुतिः कृता कृष्णरूपेणाद्या अपरा च विष्णुरूपेण तथा च विष्णुप्रियाया लक्ष्मीदेव्याः, यमुनायाः च गुणगानं कृतम्। भो रसने तव रसज्ञता तदेव भाति यदा त्वमानन्ददायिनी भूत्वा अन्धकारं नाशयितुं समर्थस्य मधुररसस्य भगवत्कृष्णस्य नामोच्चारणं करिष्यसीति –

**अव्याख्येयां वितरति परां प्रीतिमन्तर्निमग्ना**
**कण्ठे लग्ना हरति नितरां यान्तरध्वान्तजालम्।**
**तां द्राक्षाद्यैरपि बहुमतां माधुरी मुद्गिरन्तीं**
**कृष्णेत्याख्यां कथय रसने यद्यसि त्वं रसज्ञा॥[4]**

पण्डितराजस्य हृदयात् भागीरथ्याः भक्त्याः सागरः गङ्गालहरीरूपेण (पीयूषलहरी) रसगङ्गाधरस्य पद्येषु च प्रतिभाति। गङ्गेयं पतितपावनी, मोक्षदायिनी, संतापहारिणी, विष्णुपदप्रदायिनी, भक्तबन्धननिवारिणी, सर्गप्रतिसर्गविधायिनी, निराकारब्रह्मस्वरूपिणी वर्तते। यदि ब्रह्मा समाधिस्थः भवेत्, विष्णु शेषे शयीत, शङ्करनृत्येत्तथापि चिन्तायाः विषयो नास्ति गङ्गायाः तत्र स्थितत्वात्। यथा च–

**विधत्तां निशङ्कं निरवधि समाधिं विधिरहो**

1. करुणालहरी, पद्य 2
2. करुणालहरी, पद्य 30
3. करुणालहरी, पद्य 13
4. शा. वि., पद्य 10

**सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः।**
**कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः**
**सवित्रीकामानां यदि जगति जागर्ति भवती॥**[1]

अनेन प्रकारेण पण्डितराजस्येश्वरं प्रति श्रद्धाभावः विश्वासश्चासीदिति तस्य व्यक्तेः विशिष्टता। पण्डितराजः न धनस्य चिन्तां, न सम्पत्तेः, न राज्यस्य, विद्यायाः वा चिन्ता न आसीदासीत्तु भगवत्याः गङ्गायाः करुणादृट्याः यया तस्य जीवनं सरलं भवेत्।[2]

**निष्कर्षः** – अनेन प्रकारेण पण्डितराजस्य सर्वेषां गुणानां विवेचनेन स्पष्टो भवति यत् स न केवलमभिमानी अपितु आलोचकः नूतनमौलिकतानामुद्भावकः परम्परारक्षकश्चासीत्। सकलशास्त्रनिष्णातः, रसविज्ञः, वैष्णवभक्तोऽपि। तस्य व्यक्तिः एतादृशगुणानामागारः यत्र सर्वा नद्यः अवतरन्ति। तस्माद् काव्यशास्त्रस्येतिहासे तस्य व्यक्तेः विशिष्टमेवं स्थानं वर्तते।

---

1. पी. ल. पद्य 23
2. करुणालहरी, पद्य 16

# 'रावणार्जुनीयम्' का विशिष्ट अलंकार-प्रयोग

डॉ. (श्रीमती) सुनीता शर्मा

"रावणार्जुनीयम्" अथवा "अर्जुनरावणीयम्" नामक महाकाव्य संस्कृत वाङ्मय में अपना महत्त्वपूर्ण स्थान रखान है। पाणिनीय-व्याकरणोदाहरण-प्रधान इस महाकाव्य की रचना काश्मीर निवासी महाकवि भूमभट्ट ने नवीं शताब्दी (ई.) के आसपास की थी, ऐसा संस्कृत-वाङ्मय के इतिहास-लेखक मानते हैं। इस महाकाव्य के रचियता महाकवि भूमभट्ट काश्मीर प्रदेश के अन्तर्गत वल्लभी स्थान के निवासी थे, जिसे उडुग्राम भी कहा जाता था।

प्रस्तुत महाकाव्य में कवि ने सहस्रबाहु अर्जुन व रावण के युद्ध के उस वृत्त को आधार बनाया है जो रामायण के उत्तरकांड के ३१-३३ सर्गो में वर्णित है। इस वर्णन के अनुसार नर्मदातीरगत माहिष्मती नगरी के राजा कृतवीर्यपुत्र अर्जुन ने रावण को युद्ध में परास्त कर कारागार में डाल दिया था।

कुछ समय पश्चात् रावण के पितामह महर्षि पुलस्त्य के आग्रह पर उसे मैत्री सन्धि पूर्वक मुक्त दिया था। उत्तरकाण्ड के इस वृत्त को उपजीव्य बनाकर महाकवि भूमभट्ट ने २७ सर्गों का यह महाकाव्य रचा है। इसमें सर्गबन्धादि महाकाव्यों के लक्षण समुचित रूप से घटित होते हैं।

इसके अतिरिक्त काव्य की सबसे बड़ी विशेषता यह है कि इस में कवि ने अष्टाध्यायी सुत्रकम से सुत्रों के उदाहरण ऐसी कुशलता से पिरो दिए हैं कि कवि का कौशल देखते ही बनता है। इस प्रकार यह व्यकरण के प्रयोगों का अभ्यास करने के लिए अति उत्तम महाकाव्य हैं। इस शैली में रचित कोई अन्य प्राचीन काव्य उपलब्ध नहीं है। इस प्रकार इसकी यह विलक्षणता अद्वितीय है।

व्याकरणोदाहरण-प्रधान होते हुए भी यह महाकाव्य संरचना की दृष्टि से महाकाव्य बहुत ही प्रांजल है। यह प्रायः वैदर्भी रीति में ही गुम्फित है तथा इसमें अलंकारों का भी बहुत सहज, अकृत्रिम व अतिशय मनोरम रूप में प्रयोग हुआ है। प्रस्तुत शोधनिबन्ध रावणार्जुनीय की सुन्दर अलंकारयोजना का विवेचन प्रस्तुत किया जा रहा है।

